Thanjavur Sarasvati Mahal Series No. : 248

॥ श्रीः ॥

# ॥ शरभकल्पम् ॥

(आकाशभैरवकल्पान्तर्गतम्)

# SARABHAKALPAM




Edited by

Thethiyur S. KRISHNAMURTHI SASTRI
Senior Sanskrit Pandit (Retd.,)
Sarasvati Mahal Library, Thanjavur.




THANJAVUR MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY,
THANJAVUR-613 009.

# ॥ विषयानुक्रमणिका ॥





॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीमहागणपतये नमः ॥

॥श्री परमेश्वराय शरभेश्वराय नमः ॥

# ॥ शरभकल्पम् ॥

## ( आकाशभैरवकल्पान्तर्गतम् )



अष्टाङ्घ्रिश्च सहस्रबाहुरनलच्छायः शिरोयुग्मभृत्
द्विव्यक्षोऽतिजवो द्विपुच्छ [1]उदितः साक्षान्नृसिंह.[2] सहः ।
अर्धेनापि मृगाकृतिः पुनरथोऽप्यर्धेन पक्ष्याकृतिः
श्रीवीरः शरभः स पातु रुचिरं [3]नीत्वा सदा मां हृदि ॥ १

ओं नमोऽष्टपदाय सहस्रबाहवे द्विशिरसे त्रिणेत्राय द्विपक्षा-
याग्निवर्णाय मृगविहङ्गमरूपाय वीरशरभेश्वराय हुं फट् ॥ २

---

1. द्विपुच्छसहितः ।
2. नृसिंहात्सहायमसहमान इत्यर्थे नृसिंहासहः इति पाठः युक्तः प्रतिभाति ।
3. स पातु रुचिरो नीतः सदा मां हृदि इति समीचीनः स्यात् ॥ शरभकल्प नामायं ग्रन्थः न नूतनः, किं तु आकाशभैरवकल्पान्तर्गतः कश्चिदंश एव । ग्रन्थारम्भे शिवपार्वतीसंवादरूपत्वं नात्र दृश्यते । अतिजीर्णतालपत्रमय-कोशं दृष्ट्वा चिराय मया लिखिता काचित् मातृका अतीव समीचीना ग्रन्थस्यास्य संशोधने उपकाराय कल्पते ॥

अरुणमरुणमालालङ्कृताङ्गं कराग्रै-
विधृतपरशुशक्ती पुष्पबाणेषुचापम् ।
विविधमणिफणीन्द्रैर्भूषणैर्भूषिताङ्गं
शरभमखिलनाथं शालुवेशं नमामि ॥ ३

मार[1] वर्तुलमध्यके वलदले[2] मायां च लक्ष्मीं तथा
बाह्ये क्षोणिपुटे लिखेत्प्रतिदिशं[3] हूंकारके भूपुरे ।
मार[4] मध्यसमन्वितं रिपुजयं त्रैलोक्यमोहाकरं
नारीवश्यकरं विचित्रमचिरात् साम्राज्यलक्ष्मीप्रदम् ॥ ४

आलेख्यं वृत्तमध्ये मरुदनलगृहे द्वन्द्वके शक्तिलक्ष्मीं
तद्बाह्ये[5] षट्दलान्तः शरभमनुमथो सप्तकं सप्तकं च । ५
दिव्यगन्धेन[6] युक्तेन भस्मनारत्नमात्रकम् ।
चतुरस्रगतं कृत्वा तस्मिन् भस्मनि बुद्धिमान् ॥ ६

---

1. श्लोकोऽयमत्र न प्रसज्यते । तथापि संशोध्यते ।
2. वसुदले ।
3. हूंकारकं ।
4. मन्त्रं ।
5. तद्बाह्ये ।
6. अत्र श्लोकस्यास्य पूर्वार्धं केवलं दृश्यते । उत्तरार्धं तु अत्रैव ग्रन्थे तत्तत्र प्रसङ्गरहिततया लिखितमस्ति । एतदधिकृत्य वक्तव्यमुक्तमत्रैवान्यत्र ॥ उपलब्धायामस्मन्मातृकायामपि संपूर्णतया दृश्यते श्लोकस्योत्तरार्धमेवम् — "ओङ्कारं तस्य बाह्ये तदनु परिवृतं साध्यमाकर्षयेत्तां त्रैलोक्यस्थामदृष्टां स्त्रियमपि विविधान्यशु भूतानि चैतत्" इति ॥ दिव्यगन्धेनेत्यारभ्य वक्ष्यमाणमेव सङ्गतं वर्तते ॥ ततः पूर्वतनः पाठभागः अन्यत्रैव वक्तव्यः अत्र निवेशितः प्रमादादिति ज्ञायते ।

त्रिकोणं विलिखेत्पूर्वं तदग्रे वृत्तमालिखेत् ।
तद्बहिश्चाष्टपत्रं तु द्वादशारं ततः परम् ॥ ७

षोडशारं ततः पश्चात् ततो भूपुरयुग्मकम् ।
त्रिकोणमध्यदेशस्थं शालुवेश्वरमर्चयेत् ॥ ८

चिरं ध्यात्वा महामन्त्री गुरुपादयुगं स्मरन् ।
मूलेन गन्धपुष्पादिपुष्पान्तान्मण्डले पुनः ॥ ९

आवाहनादिपूजान्ता[1]मुपचारान्प्रकल्पयेत् ।
[2]चन्द्रसूर्यमहावह्नि त्रिकोणेषु यजेत्क्रमात् ॥ १०

भैरवं वडवाग्निं च दुर्गां कालीं पृथक् पृथक् ।
त्रिकोणवृत्तमध्ये तु चतुर्दिक्षु यथाक्रमम् ॥ ११

इन्द्रादीनष्टपत्रेषु तत्तन्मन्त्रेण पूजयेत् ।
पार्श्वद्वये [3]कालमृत्यू तथा देवि प्रपूजयेत् ॥ १२



मदनं रक्तचामुण्डां मोहिनीं द्राविणीं तथा ।
[4]शब्दाकर्षणजां वाणीं रमां मायां कलिन्दिनीम् ॥ १३

शास्तारं क्षोभिणीं ज्येष्ठां द्वादशारे यथाक्रमम् ।
पूजयेन्मूलमन्त्रेण स्वस्वमन्त्रेण चाम्बिके ॥ १४

---

1. पूजान्तानुपचारान् ॥
2. व्याधिमृत्यू इति मातृकान्तरे ॥
3. चन्द्रं सूर्यं महावह्निं ॥
4. शब्दाकर्षणिकाम् ॥

षोडशारे यजेत्पश्चात् षोडशस्वरदेवताः ।
[1]गणेश्वरं यमं स्कन्दं भैरवं च महादिशि ॥ १५

प्रागादितो यजेन्मन्त्री मूलेन खयुजा पृथक् ।
त्वरितां वीभद्रं च वडवानलभैरवम् ॥ १६

महामायां यजेद्देवि वायव्यादिविदिक्षु च ॥ १७

आरभ्य चाग्रतो मन्त्री ब्राह्म्याद्याश्चाष्टमातरः ।
परितस्तु यजेत्सर्वाः ककारार्णादिदेवताः ॥ १८

मूलेन शालु[2]गन्धे च धूपदीपादिकैर्यजेत् ।
स्तुतिभिस्तोषयित्वाऽथ यथोक्त प्रणिपत्य च ॥ १९

मूलमन्त्रं जपेन्मन्त्री अष्टोत्तरसहस्रकम् ।
आचार्यं पूजयेन्मन्त्री यथाशक्त्या धनैस्तथा ॥ २०

शरभं हृदयोद्धास्य शिवोऽहमिति भावयेत् ।
इत्येवं सततं कुर्यात् स्वयमेव शिवो भवेत् ॥ २१

---

1. मातृकान्तरे षोडशस्वरदेवता अत्रैव प्रकारणे प्रपञ्चिताः । अत्र मातृकायान्तु पृथक्तया उत्तरत्र वक्ष्यन्ते ॥

2. शालुवेशं च ॥ मातृकान्तरेऽयमध्यायः शिवपार्वतीसंवादरूपेण निबद्धः । - शिवः - "आराधनं प्रवक्ष्यामि सर्वसिद्धिप्रदायकमिति सार्धपञ्चश्लोकानुक्त्वा ततः पञ्चश्लोकस्य उत्तरार्धरूपेण" दिव्यगन्धेन धुत्तूरेणेत्यादिकं वदति ॥

तद्भस्मागमनं श्रुत्वा कम्पन्ते विग्रहा ग्रहाः ।
किं पुनर्दर्शनात्तस्य भूतप्रेतादिराक्षसाः ॥ २२

॥ इत्याकाशभैरवकल्पे शरभेशयन्त्रपूजनविधानं नाम
त्रिचत्वारिंशोऽध्यायः ॥

---

[1]शिव उवाच –

आराधनान्तरं वक्ष्ये सर्वसिद्धिप्रदायकम् ।
भोगमोक्षप्रदं पुण्यं भुक्तिमुक्त्येकसाधनम् ॥ १

विषुकालेऽयने पुण्ये पूर्णिमायां च दर्शके ।
एकादश्यां च द्वादश्यां शुक्रसौम्येन्दुवासरे ॥ २

जन्मर्क्षे च [2]विपक्षे च प्रत्यरे वध[3]ऋक्षके ।
शोभने पातके ब्राह्मे [4]दण्डयोगादिवर्जिते ॥ ३

सिद्धयोगं [5]त्वयाकाशपातालरहिते दिने ।
विजने मण्टपे रम्ये गोमयेनोपलेपिते ॥ ४

---

1. अयं भागः ग्रन्थारम्भे वक्तव्यतया मातृकान्तरतः अवगम्यते ।
2. विपद्दे च । 3. वधर्क्षके इति मातृकान्तरे । 4. दण्डयोगादिवर्जिते इति मातृकान्तरे । 5. सिद्धयोगेऽथ सङ्क्रान्ताविति मातृकान्तरे ॥

वितानपद्ममालाढ्ये धूपदीपसमाकुले ।
स्नात्वा पवित्रपाणिः सन् शुद्धो मौनी दृढव्रतः ॥ ५

प्राङ्मुखोदङ्मुखो वाथ सुखासीनः स्वलङ्कृतः ।
[1]अकार ब्रह्मदैवत्यं श्वेत[2] सर्ववशङ्करः ॥ ६

सर्वज्ञत्वं मनोज्ञत्वं कामरूपत्वमम्बिके ।
आकारं तु पराशक्तिः [3]श्वेतमार्षं सुसिद्धिदम् ॥ ७

[4]इच्छासिद्धिं स्वात्मसिद्धिं रससिद्धिं वरानने ।
इकारं विष्णुदैवत्यं श्यामं रक्षाकरं भवेत् ॥ ८

रूपकान्तिप्रदे[5] श्रेष्ठं वरेण्यं मोक्षसिद्धिदम् ।
मायादैवतमीकारं श्यामं मोहनकारकम् ॥ ९

वीराणां वनितानां च वशीकारं वरानने ।
उकारं लोक[6]दैवत्यं श्यामं सर्ववशङ्करम् ॥ १०

मृतकोत्थापनं पुण्यं क्रूररोगविनाशनम् ।
ऊकारं पृथिवीबीजं श्यामं रक्षाकरं परम् ॥ ११

---

1. इतः परं "दिव्यगन्धेन युक्तेनेत्यारभ्य "षोडशारे यजेत्पश्चात् षोडशस्वर-देवताः" इत्यन्तमुक्त्वा अकारं ब्रह्मदैवत्यमित्यादिकं कथ्यते मातृकान्तरे । स चानुगतः पाठ इति प्रतीयते ॥ 2. श्वेतं सर्ववशंकरम् ।
3. श्वेतमाकर्षसिद्धिदम् ॥ 4. इच्छासिद्धिस्वात्मसिद्धिप्रदं शिवे ॥
5. प्रदं ॥ 6. कोपदैवत्यम् ॥

भूतप्रेतपिशाचानां नाशनं रिपुनाशनम् ।
ऋकारं विधिदैवत्यं पीतं सर्वार्थसिद्धिदम् ॥ १२

चिरायुष्यं तपःसिद्धिं परं भोगं [1]वरानने ।
ॠकारं शिवदैवत्यं रक्तं सर्ववशङ्करम् ॥ १३

जन्ममृत्युजराव्याधिवर्जदं[2] श्रीजयप्रदम् ।
एकारं[3] वीरभद्रं स्यात् पीतं सर्वार्थसिद्धिदम् ॥ १४

निग्रहानुग्रहकरं भीषणं जयवर्धनम् ।
ऐकारं भारतीं विद्यात् स्फटिकं ज्ञानसिद्धिदम् ॥ १५

चतुःषष्टिकलासिद्धिदायकं परमं शिवे ।
ओकारं शिवदैवत्यं ज्योतिर्मयमनुग्रहम् ॥ १६

मनोवेगप्रदं श्रेष्ठं शान्तं सर्वफलप्रदम् ।
औकारं शाङ्करं[5] विद्यात् स्फाटिकं सर्वसिद्धिदम् ॥ १७

सारस्वतं विशेषेण शत्रूणां कोपनाशनम् ।
संकारं रुद्रबीजं स्यात् रक्तं देववशङ्करम् ॥ १८

---



1. चिरायुष्यं तपःसिद्धिभोगदं च वरानने ॥

2. वर्जितमिति मातृकान्तरे वर्जनमिति युक्तः प्रतिभाति ॥

3. आश्विनं च ऌॡकारं रक्तः रोगवशङ्करम् ।
तीव्रसिद्धिं भिषक्सिद्धिं ओषधीसिद्धिदं भवेत् ॥

इति मातृकान्तरगतः पाठः ॥

[1] सर्वलोकजयङ्कारं पापचित्तविशुद्धिदम् ।
अःकारं कालरुद्रं स्यात् रक्तं पाशनिकृन्तनम् ॥ १९

स्वप्रपञ्चोपसंहारं परमात्मप्रबोधकम् ।
[2] ककारं ब्रह्मबीजं स्यात् पीतं वृष्टिकरं परम् ॥ २०

सञ्जीवनमशेषाणां लोकानां [3]वृष्टिकारकम् ।
खकारं जाह्नवीबीजं स्फाटिकं पापनाशनम् ॥ २१

भोगमोक्षप्रदं पुण्यं भुक्तिमुक्तिप्रदायकम् ।
गकारं तु गणेशं स्यात् पीताभं विघ्ननाशनम् ॥ २२

[4]पूर्वापरस्थितं ... ... भूलोकविजयप्रदम् ।
घकारं भैरवं विद्यात् रक्ताभं शत्रुनाशनम् ॥ २३

महाघोरग्रहाकारं सारूप्यजयवर्धनम् ।
ङकारं कालबीजं स्यात् कृष्णं [5]जीवजयप्रदम् ॥ २४

महाभीमं जगत्क्षोभ्यं मरणापत्तिभञ्जनम् ।
चकारं भद्रकालीयं रक्ताभं [6]शोभनं परम् ॥ २५

---

1. सर्वलोके च यन्मन्त्रसिद्धिदं चित्तशुद्धिदम् इति मातृकान्तर गतः पाठः ।
2. इतःपरं मातृकान्तरे "गणेश्वरं यमं स्कन्दं भैरवं च महादिशि" इत्यारभ्य "ब्राह्मणाद्यश्चाष्टमातरः" परितस्तु यजेत् सर्वाः ककाराद्यर्णदेवताः" इत्यन्तमुक्त्वा ततः परं ककारं ब्रह्मणो बीजमित्यादिकं दृश्यते ॥
3. वह्नि ॥ 4. पूर्वापरस्थितिज्ञानम् ॥ 5. उष्णज्वर क्षयं परमिति मा ॥
6. शोभनं भवेत् ॥

[1]स्वेच्छाकर्षणवृद्धिः स्या स्वस्थावेशनयं ततः ।
छकारं भीमकालीयं रक्ताभं वैरिनाशनम् ॥ २६

सङ्क्रामणं त्रिलोकघ्नं समरे विजयप्रदम् ।
जकारं जातवेदाख्यं तुर्यं सौदामिनीप्रभम् ॥ २७

[2]अभिचारं महाघोरमपमृत्युभयापहम् ।
झकारमर्धनारीशं श्यामं रक्तसमाकुलम् ॥ २८

सर्वसौख्यकरं श्रेष्ठं भोगमोक्षफलप्रदम् ॥ २९

ञकारं [3]परमं ज्ञेयमवाङ्मनसगोचरम् ।
सर्वज्ञानप्रदं ब्रह्मज्ञानदं श्रीजयप्रदम् ॥ ३०

टकारं पृथिवीबीजं श्वेतं संहारकारकम् ।
[4]...... औषधीवृद्धिः पातालनिधिदर्शनम् ॥ ३१

ठकारं चन्द्रबीजं स्यात् स्फाटिकं शत्रुनाशनम् ।
रोगक्ष्वेळहरं दिव्यं महाज्वरहरं परम् ॥ ३२

डकारं [5]शुक्रबीजं स्यात् [6]पीताभं ज्ञानदं भवेत् ।
मृतसञ्जीवनं च स्यान्महामायावशं भवेत् ॥ ३३

---

1. स्वेच्छाकर्षणसिद्धिः स्यात् स्वस्थावेशकरं परम् ॥
2. घोराभिचारशमनम् ॥
3. परमात्मीयं अवाङ्मनसगोचरम् ॥
4. कृष्यादावोषधीवृद्धिः ॥
5. शुक्रबीजं स्यात् ॥
6. पीताभं विजयप्रदम् ॥

ढकारं वैष्णवं विद्यात्पीतं सर्वार्थसिद्धिदम् ।
बलप्रदं जलस्तम्भं पातालस्यापि दर्शनम् ॥ ३४

णकारं [1]बलभद्रं स्यात् श्वेतं बलविवर्धनम् ।
नित्यत्वं युद्धवीर्यत्वं रिपुदर्पविनाशनम् ॥ ३५

तकारं धनदं विद्यात् पीतमैश्वर्यवर्धनम् ।
यक्षकिन्नरसिद्धानां वशीकारं [2]जगद्द्वयम् ॥ ३६

थकारं तु पराशक्तिः रक्तं कालजयं भवेत् ।
शान्तिकं पौष्टिकं चैव [3]भोगमायुष्यवर्धनम् ॥ ३७

दुर्गाबीजं दकारं स्यात् श्यामं सर्वार्थसाधकम् ।
निग्रहानुग्रहकरं भोगमोक्षैकसाधनम् ॥ ३८

[4]धकारमर्धबीजं स्यात् श्वेतं पुण्यविवर्धनम् ।
[6]सर्ववेदमयं दिव्यं सर्वदर्शनदर्शनम्[6] ॥ ३९

नकारं निर्विकल्पं स्यात् [7]अप्रमेयाभमक्षरम् ।
वायुवेगमनोवेगमिच्छारूपं वरानने ॥ ४०

पकारमग्निबीजं स्यात् रक्तं सर्वहरं क्षणात् ।
स्त्रीपुंनपुंसकादीनां भवेदाकर्षणं भवेत्[8] ॥ ४१

---

1. बलभद्रीयं ॥
2. जगत्त्रये ॥
3. भोग्यमायुष्यवर्धनम् ॥
4. धकारं धर्मबीजं स्यात् ॥
5. सदादेवमयम् ॥
6. दर्शकम् ॥
7. अप्रमेयोऽयमक्षरः ॥
8. शिवे ॥

फकारं भैरवं विद्यात् रक्ताभं विजयं ततः ।
महाग्रहहरं सर्वज्वररोगविनाशनम् ॥ ४२

बकारं चाश्विनीबीजं [1]कृष्णाभं बलवर्धनम् ।
[2]सर्वोच्चाटकरं क्रूरं सङ्ग्रामे विजयप्रदम् ॥ ४३

भकारं भार्गवं बीजं [3]लोकरक्षणकारणम् ।
[4]प्रकारं ईश्वरं बीजं [5]लोकसंहारकारकम् ॥ ४४

यकारं वायुबीजं स्यात्सर्वोच्चाटनकारकम् ।
[6]रेफः कृशानुबीजं स्याद्रक्ताभं सर्वनाशनम् ॥ ४५

जङ्गमाकर्षणं युद्धे द्विषां सेनाबलं तथा ।
लकारं शक्तिबीजं स्यात्पीतं सर्वफलप्रदम् ॥ ४६

अग्निस्तम्भं जलस्तम्भं स्वेच्छास्तम्भं विशेषतः ।
वकारं वारुणं बीजं श्वेतं [7]स्वेच्छाभिसिद्धिदम् ॥ ४७

---

1. पीतं दाहहरं परम् ।
2. अत्रेदमर्धमुत्तरत्रान्वेयतया मातृकान्तरे दृश्यते । बकारबीजस्य विशेषवर्णनपरतया "औषधय महावीर्यवर्धनं जयवृद्धिदम् इति दृश्यते ।
3. ज्योतिर्मयमनामयम् ।
4. मकारबीजमहिमवर्णनपरत्वेनेदमुत्तरार्धं मातृकान्तरे – आयुरारोग्यदं श्रेष्ठमशेषश्रीविवर्धनम् इति ॥ प्रकारस्य विशेषबीजत्वकथनमत्र न सङ्गच्छते । मकारबीजस्यैवात्र कथनीयत्वात् मकारमीश्वरं विद्यात् ज्योती रक्तं सुखावहम् । वश्याकर्षणसन्तानसिद्धिदानैकतत्परम् ॥
5. सर्वोच्चाटनकं क्रूरं सङ्ग्रामे जयवर्धनम् ।
6. आयुधानां विशेषतः इति मातृकान्तरे ।
7. स्वेच्छाभिवृद्धिदम् ।

आकर्षणं [1]जलस्थानादशेषज्वरनाशनम् ।
शाकारं शाङ्करं [2]विद्यां तेजःसौभाग्यवर्धनम् ॥ ४८

[3]अन्योन्यकलहा देववैरिणां नाशनं भवेत् ।
षकारं द्वादशादित्यं ज्योतिरारोग्यवर्धनम् । ४९

शमनं सर्वरोगाणामायुर्विद्याभिवर्धनम् ।
सकारं भारतीबीजं श्वेतं सारस्वतप्रदम् ॥ ५०

प्रतिविद्वज्जनजयं नराणां योषितामपि ।
सदाशिवं हकारं स्यात् धूम्रं ज्ञानार्थसिद्धिदम् ॥ ५१

अणिमाद्यष्टसिद्धिः स्यात् चतुःषष्टिकला अपि ।
ळकारं पृथिवीबीजं पीतं सिद्धिकरं परम् ॥ ५२

[4]असंभवं दीवृद्धिरपि भूमि द्रव्यस्य दर्शनम् ।
क्षकारं श्रीनृसिंहं स्यात् स्फाटिकं मोक्षसिद्धिदम् ॥ ५३

रिपुगर्वहरं सर्वलोकक्षोभकरं परम् । ५४

[5]इति सुमति हरेर्या मातृकादेवतानां
द्युबलमहिमादीनादितः स्वामिवक्त्रात् ।

---

1. जलस्थानाद् ।
2. विद्यादिति मातृकान्तरे ॥ विद्यातेजःसौभाग्यवर्धनमिति वा पाठः साधुः ।
3. अन्योन्यकलहाद्देव वैरिणां नाशनं भवेत् ।
4. "संभवेदोषधीवृद्धिरपि भूद्रव्यदर्शनमिति" मातृकान्तरे ।
5. इति सुमतिरिहार्थं मातृकादेवतानां मनुबलमहिमादीनादितः स्वामिवक्त्रात् ।
सकलमपि तु लब्ध्वा साळुवाराधनान्ते जपतु विविध ... ... ॥

सकलमपि च लब्ध्वा शालुवाराधनान्ते
जयतु विविधसिद्ध्यै हेतुबीजेन मन्त्रम् ॥ ५५

दशशतमथ मन्त्री सावधानः प्रहृष्टः
[1] प्रपणितदृढभावः प्राकृतारम्भशून्यः ।
[2] जपे विधिमिधिपूर्वं काममायां च पूर्णां
[3] ... ... ... ... ... ... ... ॥ ५६

[4] ... ... ... प्रथमं प्रयोक्ता
जपेत्सहस्रं शरभेशमन्त्रम् ।
स मानुषः सर्वकलाप्रवीणः
प्रयाति तूर्णं पदमीश्वरस्य ॥ ५७

आदाववर्गसहितैः पञ्चाशद्भिस्ततः परम् ।
पृथग्वर्णैस्ततः पश्चात् जपेत्सौभाग्यवृद्धये ॥ ५८

साध्यनामविलोमार्णं मन्त्रार्णं चानुविध्य तत् ।
त्रिसहस्रजपेनैव जन्तुः (शत्रुः) कालपुरं व्रजेत् ॥ ५९

यदि मन्त्री नरस्तस्य देवतावर्णपूर्वकम् ।
अनुविध्य विलोमेन सञ्जपेदयुतं मनुम् ॥ ६०

---

1. प्रवणित ।
2. जपमिति विधिपूर्वं मातृकायाश्च वर्णान् ।
3. "प्रथमममभिनियोज्य त्वेकमेकं च कुर्यात्" इति मातृकान्तरे ।
4. पदद्वयमिदं मातृकायामशावसरे छिन्नितं दृश्यते ।

देवताश्च प्रलीयन्ते पक्षिराजे महारवे । (?)
तस्मात्सर्वप्रयत्नेन जपेदेवं वरानने ॥ ६१

मन्त्रान्ते[1] यो जपित्वा तु क्रियासाध्यं सपल्लवम् ।
विविधेषु प्रयोगेषु प्रजपेत्सर्वसिद्धये ॥ ६२

यन्त्रतन्त्राधिना[2] चापि यो जपेन्मन्त्रवित्तमः ।
सर्वसिद्धिं जपादेव [3]सहस्रैव व्रजेच्छिवे ॥ ६३

देव्युवाच —

ननु[4] चात्र कथं शम्भो नैव स्यात् यन्त्रतन्त्रकम् ।
यदि स्याद्यन्त्रतन्त्राभ्यां किं प्रयोजनमादिश ॥ ६४

शिव उवाच —

शृणु साधु शिवे वच्मि पुरश्चर्याक्रियाविधिम् ।
यन्त्रतन्त्रक्रियापूर्वं यदि कुर्याल्लभेत् तदा ॥ ६५

चिरकालजपैः [5]क्रूरैः? यः करोत्यङ्गशोषणैः ।
सिद्धिं सर्वामवाप्नोति यन्त्रतन्त्रविवर्धनात् ॥ ६६

पुरश्चर्याद्वयेनैव स्मरणात्सिद्धिमेति सः
यन्त्रं तन्त्रं विना देवि न फलं जायते जपात् ॥ ६७

---

1. एवं जपतः कीदृशी सिद्धिर्भवतीति न मातृकायां प्रपञ्चितम् ।
2. दिना ।
3. सहसैव ।
4. शम्भो यदि यन्त्रतन्त्रे न स्तः तर्हि तद्द्वयेन विना क्रियमाण-जपपूजादीनां फलं कीदृशम् ? यदि यन्त्रतन्त्रद्वयं स्यात् तर्हि किं फलं सिद्ध्यति ?
5. जपक्रियायां क्रूरत्वे अनन्यसाधत्वं ज्ञायते ।

[1]सधाम (?) मनुजो मन्त्री पुरश्चर्याद्वयं चरेत् ।
स्मरणात्तेन सिद्धिः स्यात् नानाकर्मक्रियादिषु ।। ६८

सर्वेषां मन्त्रजालानां यदि [2]साध्यं युगे युगे ।
तत्सर्वं स्मरणादेव सिद्धिर्भवति तत्त्वतः ।। ६९

॥ इति मातृकादेवतावर्णनम् ॥

[3]ओङ्कारं तस्य बाह्ये तदनु परिवृतं साध्यमाकर्षयेत्तां ।
त्रैलोक्यस्थामदृष्टां स्त्रियमपि विविधान्याशु भूतानि चैतत् ।।

त्रिदशमथ शुकाभं श्याममालावतंसं
मुशलहलरथाङ्गं मुष्टिकाभीतिहस्तम् ।
ग्रहगणरिपुसैन्यस्तम्भविद्वेषसिद्ध्यै
प्रतिदिनमिति मन्त्री भावयेत् शालुवेशम् ।। ७१




मध्ये वृत्तं सभूमि बहिरथ पृथिवीकोणको[4] शक्तिबीजं
तद्बाह्ये कोणषट्के शरभमनुमथो बाह्यके भूमिकोणे ।
भूमिं शक्तिं च [5]बाह्यप्रणवमथ बहिः साध्यकं स्तम्भनाख्यं
शत्रूणां [6]आशु दृष्टिश्रुतिमुखहनु[7]यत्पाणिनां यन्त्रमेतत् ।।

[8]षट्कारं वृत्तमध्ये तदुपरि कमले लान्तकं शक्तियुक्तं
तद्बाह्ये राशिकोणे त्वजवृषभमुखान्यालिखेत्कोणमूले ।

---

1. सकाम इत्येव पाठ. ऊह्यते ॥ 2. यद्यत्साध्यं इति युज्यते पाठः ॥
3. अयं भागः "पूर्वत्रोक्तस्य आलेख्यं" वृत्तमध्ये इति श्लोकार्धस्य उत्तरार्धभूतः अत्र निवेशितः ॥ 4. कोणके ॥ 5. बाह्ये ॥ 6. आस्य ॥
7. पत्पाणिनाम् ॥ पाणीनामित्यर्थे प्रोक्तोऽयमार्षः प्रयोगः ॥ 8. फट्कारम् ॥

[1]आलिख्यं साध्यमेतत्सकलमपि ततस्तारमायाभिवीतं
विद्वेषे यन्त्रमेतत् [2]त्रिभुवनमपि किं स्वल्पकानां नराणाम् ॥

ज्वलदनलमुखाभं सूर्यचन्द्राग्निनेत्रं
स्वकरकलितशूलं खड्गखेटं वहन्तम् ।
सकलरिपुजनानां [3]कण्ठदृग्वाविभक्तं
स्मरत शरभमेवं [4]मारणोच्चाटनाय ॥ ७४




वायुं सद्वृत्तमध्ये तदनु [5]भृगुगृहे पावकं तस्य बाह्ये
षट्कोणे शालुवेशं त्रिशिखमथ बहिस्तस्य रेखाग्रसाध्यम् ।
तद्बाह्ये [6]शक्तियुक्तं विजयजययुतं [7]दीपिकालीति यन्त्रं
शत्रूणां [8]भूतनाथाग्रहगणसमरोच्चाटनं यन्त्रमेतत् ॥ ७५

बीजं स्वाहेति कोणे [9]ऋतुग्रहविवरे वायुबीजं ससाध्यं
तद्बाह्ये नागकोणे शिखिसहितमथो साध्यनामाष्टपत्रे ।
वंकारं साध्यपूर्वं [10]क्षितिभवनमहीं साध्ययुक्तं दशारे
व्योमाख्यं [11]साध्यमुक्तं शरभमनुवृतं [12]शत्रुसंहारयन्त्रम् ॥

शालुवेशाय विद्महे पक्षिराजाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥ ७७

---

1. अलेख्यम् ॥ 2. त्रिभुवननिवसत्क्षुद्रकाणां नराणाम् ॥ 3. कण्ठद्रुस्तिभिन्नम् ॥ 4. मारणोच्चाटनाय ॥ 5, कुजगृहे ॥ 6. शक्तिबीजम् ॥ 7. दीपिकावीतयन्त्रम् ॥ 8. भूतनाथग्रहगणसमरोच्चाटनञ्चैवमेतत् इति पाठभेदाः अस्मदुपलब्धमातृकायां दृश्यन्ते ॥ 9, ऋतुगृह ॥ 10. क्षितिभवनमथो ॥ 11. साध्ययुक्तम् ॥ 12. सर्वसंहारचक्रम् इति च ॥

एतदस्त्रं महामन्त्रं जपेन्मन्त्री सदाम्बिके ।
तस्य [1]सर्वभयं नास्ति स्वप्नेऽपि च कदाचन ॥ ७८

शरभास्त्र[2]मियं प्रोक्तममोघं [3]जपवर्धनम् ।
तत्प्र[4]सादं दृशा [5]दृष्टुं न सहन्ते सुरा[6]सुरः ॥ ७९

कुतो [7]नरपिशाचाश्च क्षुद्रभूताभि[7a]वारकाः ।
ग्रहग्राम[8]वृता क्लिष्टाः खेचराः पृथिवीचराः ॥ ८०

तस्मादेवं प्रयत्नेन अष्टोत्तरशतं नरः ।
मन्त्र[9]पूजं समकृष्टु[10] कालेनापि न दृश्यते[11] ॥ ८१

बुद्धिमान् शरभं[12] घोरमस्त्रराजं महामनुम् ।
न्यासभावं[12a] जपं कुर्यात् अन्वहं पापमुक्तये ॥ ८२

औधं[13] च तिर्यक् ग्रहवेधरेखं[14]
लिखेत्क्रमादस्त्रविशेष[15]मन्त्रम् ।
बाह्ये [16]शुशूलान्विलिखेत्संसाध्यं
त्रैलोक्यसंहारमिदं त्वमोघम् ॥ ८३

विषवृक्षे समालिख्य प्राणानावाह्य पूजयन् ।
अष्टोत्तराख्यसाहस्रं जपेदेकाग्रमानसः ॥ ८४

बलिपूर्वं श्मशानमध्ये दक्षिणास्यो[17] खनेन्निशि ।
तस्मात्ततो[18] जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ ८५

---

1. सर्पं ॥ 2. मिदम् ॥ 3. जय ॥ 4. तत्प्रभावम् ॥ 5. द्रष्टुम् ॥
6. सुरासुराः ॥ 7. रक्षःपिशाचाश्च ॥ 7a. कारकाः ॥ 8. ग्रहग्रामावृताः ॥
9. मन्त्रपूतम् ॥ 10. समाकृष्टुम् ॥ 11. न शक्यते ॥ 12. शारभम् ॥
12a. सहन्यासं ॥ 13. ऊर्ध्वं च ॥ 14 रेखाः ॥ 15. यन्त्रमनन्यमानसः ॥
16. बाह्येषु ॥ 17. दक्षिणास्यः ॥ 18. ततः खात्वा ॥

रिपवो [1]मरणं [2]यन्ति संशयो नास्ति सुन्दरि ।
भानुमण्डलमध्यस्थं वैरिणं दर्शकेऽहनि ॥ ८६

राहुसंग्रहणादेव कृष्णवर्णमधोमुखम् ।
पुरपाक[3]तनुक्रीतं निर्वाप्राणसंक्रमम् ? ॥ ८७

चिरं ध्यात्वा जपेन्मन्त्रमष्टोत्तरसहस्रकम् ।
जपान्तेऽस्य[4] त्रिधा कुर्यात्सूर्यमालोकयन्सुधीः ॥ ८८

भूयो जपेत्सहस्रं तु स्मृत्वा भस्मकृतं रिपुम् ।
स रिपुस्तत्क्षणादेव मरणं यात्यहैतुकम् ॥ ८९

द्विषन्तमुद्दिश्य सहस्रवारं
जप्त्वा घृतं तेन हुनेत् हुताशे ।
दिनावसानात्परतो रिपूणां
शरीरनाशाय सुसिद्धिमन्त्रम्[6] ॥ ९०

बिन्दुवह्निरसकोणमथाष्ट-
द्वन्द्वकं सचतुर्दशपत्रम् ।
भूपुरं च विलिखेदथ मन्त्री
[7]मध्यमावहि नाम सतारम् ॥ ९१

॥ इत्याकाशभैरवकल्पे उमामहेश्वरसंवादे प्रत्यक्षसिद्धिप्रदे शरभयन्त्रमन्त्रकथनं नाम षट्चत्वारिंशोऽध्यायः ॥

*

---

1. मरणम् ॥ 2. यान्तीत्यपि ॥ 3. पुटपाकतनुं क्वान्तं निर्वाणं प्राणसङ्कटम् ॥
4. जपान्तेऽर्घ्यम् ॥ 5. पुरतो ॥ 6. सुसिद्धमन्त्री ॥ 7. मध्यमादहितनाम ॥

## ॥ अथ जपविधिः ॥

ओं रात्रिशेषे समुत्थाय गुरुं ध्यायेच्छिरोऽम्बुजे ।
वरदाभयदं शम्भुं पक्षिराजस्वरूपकम् ॥

एवं ध्यात्वा पक्षिराजं गायत्र्यष्टोत्तरं जपेत् ।
पक्षिराजाय विद्महे शरभेश्वराय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥

तत्रासनमास्तीर्य – "ओं ह्रीं आधारशक्तिकमलासनाय नमः" इत्यासनं संपूज्ज – उपविश्य भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान्तानि[1] नित्यक्रियां कृत्वा

गुं गुरुभ्यो नमः (वामकर्णे)
गं गणपतये नमः दक्षे (कर्णे)
क्षं क्षेत्रपालाय नमः पृष्ठे



श्रीशरभेश्वरमहामन्त्रस्य कालाग्निरुद्रऋषये नमः । (शिरसि) ॥ जगतीछन्दसे नमो (मुखे) भगवते शरभेश्वराय देवतायै नमः (हृदि) ॥

खं[3] नमः गुह्ये ॥ स्वाहा शक्तये नमः (पादयोः) फट् कीलकाय नमः (सर्वाङ्गे) ॥ स्वेच्छाप्रयोगसिद्ध्यर्थे जपे (विनियोगाय नमः [सर्वाङ्गे])

---

1. न्यासान्तां 2. खं बीजाय नमो गुह्ये ॥

ओं खें खां अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः

ओं खं फट् इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः

ओं प्राणग्रहासि प्राणग्रहासि हुं फट् उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः

ओं सर्वशत्रुसंहारणाय एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः

ओं शरभसालुवाय ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः

ओं पक्षिराजाय हुं फट् स्वाहा अं यं रं लं वं शं षं सं हं (क्षः?) [ळं क्षं] अः करतलकरपृष्ठाभ्यां नमः

एवं [1]हृदयन्यासः ॥

भूर्भुवः स्वरोमिति दिग्बन्धः ॥

ध्यानम् – चन्द्रार्कौ [2]इत्यादि ॥



अन्यच्च –

[3]मृगस्त्वार्धशरीराणि प्रक्ष्याभ्यां चञ्चुना द्विजाः ।
अधोवक्त्रश्चतुष्पाद ऊर्ध्ववक्त्रश्चतुर्भुजः ॥

---

1. हृदयादिन्यासाः ।
2. चन्द्रार्काग्निस्त्रिदृष्टिः कुलिशवरनखश्चञ्चलात्युग्रजिह्वः
कालीदुर्गा च पक्षौ हृदयजठरगो भैरवो बाडवाग्निः ।
ऊरुस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून् स जयति शरभः सालुवः पक्षिराजः ॥
3. मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।

[1]कालाग्निदहनोपस्थो नीलजीमूतसन्निभः ।
हरिस्तद्दर्शनादेव विनष्टबलविक्रमः ॥ ५

इति[2] ध्यात्वा – पञ्चपूजा[3] – नमेत् –

[4]फट् चाटोपदरूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमः शरभमूर्तये ॥ इति ॥ ६

अथ जपविधिः —

अविघ्नं कुरु माले त्वं जपकाले [5]तदा मम ।
सिद्धिं मे देहि सततं देवताप्रीतिकारकम्[6] ॥ ७

ह्रीं सिद्धयै नमः ॥ सिद्धिं कुरु – इति मालां सम्पूज्य –

तारशब्देन सहितं अष्टोत्तरशतं जपेत्[7] ।
मालामन्त्रं प्रवक्ष्यामि रहस्यं शृणु शोभने ॥ ८

मन्त्रस्मरणमात्रेण करस्थाः सर्वदेवताः ।
[8]ओं नमः पक्षिराजायेति मालामन्त्रं पठेत् तथा ॥ १०

---

1. कालाग्निदहनोपेतो नील ... ... ॥
2. शरभो नः सदा पायात् हरिविक्रमभञ्जकृत् ॥
3. पञ्चपूजां कृत्वा ।
4. फट्कारद्वय (पद) रूपाय ।
5. सदा ।
6. प्रीतिकारिणीम् ॥
7. मूलमन्त्रोऽत्रानुक्तोऽप्युत्तरत्रोद्धरिष्यते ।
8. अनुक्तो मालामन्त्रः अनुबन्धे योजितः ॥

त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शुभं कुरुष्व मे भद्रे यशो वीर्यं च मे सदा । ११

इति मालास्थापनम् ।

उत्तरन्यासान्ते — गुह्यातिगुह्यमन्त्रेण जपफलं देवदक्षिणकरे समर्पयेत् ॥ इति जपविधिः ॥

**देव्युवाच –**

देव देव महादेव गिरीश जगतः पते ।
पहि मां जगतां नाम[1] सच्चिदानन्दविग्रहः[2] ॥ ११

मन्त्राणामपि यत्सारं सर्वलोकोपकारकम् ।
रक्षणां[3] सर्वजन्तूनां ब्रूहि मे तद्विभो मम ॥ १३

**शिव उवाच –**

रहस्यं श्रृणु देवेशि सर्वरक्षाकरं नृणाम् ।
यस्य स्मरणमात्रेण वैरिणां कुलनाशनम् ॥ १४

शरभेश्वरमन्त्रस्य ऋषिः कालाग्निरुद्र वै [4] ।
छन्दस्तु [5]जगतो देवो भगवान् शरभेश्वरः ॥ १५

स्वंकार[6] बीजमित्युक्तं स्वाहा शक्तिः ततः परम् ।
फट्कार[7] कीलकं प्रोक्तं नीराजयतलोचने[8] ॥ १६

---

1. नाथ । 2. सच्चिदानन्दविग्रह ॥ 3. रक्षणम् ।
4. छन्दोभङ्गनिवारणाय वै कालाग्निरुद्रक इति वास्तु ॥
5. जगती । 6. खंकारं । 7. फट्कारं
8 नीरजायतलोचने ॥

स्वेच्छाप्रयोगसिद्ध्यर्थे विनियोगस्तथाम्बिके ।
मन्त्राक्षरैः करन्यासं मातृकासहितं शिवे ॥ १७

अङ्गन्यासं मातृ[1]कृत्वा ध्यात्वा वै शरभेश्वरम् ।
तारं प्रथममुद्धृत्य [2]स्वे खां खं फट् तथैव च ॥ १८

प्राणग्रहासि [3]द्वितायं हुं फट् [4]तदनन्तरम् ।
सर्वेति पदमाभाष्य शत्रुसंहारणाय च ॥ १९

शरभः शालुवायेति पक्षिराजाय तद्वदेत् ।
हुं फट् स्वाहेति मन्त्रोऽयं द्विचत्वारिंशदक्षरम् ॥ २०

जपेद्वर्णसहस्राणि समाहितनवेति [5]सः ।
दशांशं तर्पणं होमं तद्दशांशं जितेन्द्रियः ॥ २१

अभ्यङ्गस्नानशुद्धान्तःकरणान् भोजयेत् द्विजान् ॥ २२

॥ इति जपविधिः ॥




*

1. ततः तथेति वा ॥ 2. खें ॥ 3. द्वितयम् ॥ 4. छन्दोभङ्गः आर्षः ॥
5. समाहितमनाः सदान्यः समाहितमानसः इति वा ॥

## ॥ अथ (पूजा) यन्त्रक्रमः ॥

भस्ममध्ये लिखेद्विद्वान् शरभेश्वरयन्त्रकम् ।
रक्तपुष्पैश्च गन्धैश्च पूजां कुर्याद्विचक्षणः ॥ २३

सप्तरात्रं जपेन्मन्त्रं सहस्रद्वयमानतः ।
तद्भस्म चैकीकृत्वा तु धारयेत् यस्तु मानवः ॥ १४

सङ्ग्रामे शत्रवो दृष्ट्वा पलायन्ते च तत्क्षणात् ।
एवं भस्मप्रभावेण कम्पंते[1] ऽखिलदेवता[2] ॥ १५

तत्कोपात् भुवनं देवि नाशमेति च तत्क्षणात् ।
स्वर्गभूतलपातालवासिनोऽमर्त्यमर्त्यकाः ॥ २६

सालुवाः [3]स्मरणादेव मरण यत्प्रहेतुकम् ।
सालुवस्य प्रयोगेन[4] त्रिमूर्तिर्नैव रक्षति ॥ २७

षट्सप्तकोष्ठेषु विलिख्य शारभं
रेखाग्रशूले[5] तदग्रसाध्यकम् ।
बाह्येषु मायावृततारहेतुकं
संसाधितं चक्रवरं जयाभिधम् ॥ २८

---

1. कम्पन्ते ॥ 2. अखिलदेवताः ॥ 3. सालुवस्मरणादेव मरणं यान्त्यहेतुकम् ॥ 4. प्रयोगेण ॥ 5. रेखाग्रशूलानि ॥

[1]पूर्वादितो जपेद्विद्वान्निंद्रादीन्यमरेश्वरी (?) ।
यन्त्रस्योभयपार्श्वे तु व्याधिमृ[2]त्युजपेत्ततः ॥ २९

भैरवं बडवाग्निं च पुरतः परिपूजयेत् ।
[3]भद्रकालि तथा दुर्गां सन्धिस्थाने [4]जपेत्प्रिये ॥ ३०

तत्कोष्ठेषु च देवेशि मन्त्रवर्णान् समर्पयेत् ।
मध्यकोष्ठे जपे[5]त्सालु [6]भावकं शरभेश्वरम् ॥ ३१

आवाहनादिपूजान्तं मूलमन्त्रेण पूजयेत् ।
धूपदीपैर्महादीपैः कुलदीपैर्विशेषतः ॥ ३२

क्रमेणैवं वरारोहे शरभं परिपूजयेत् ।
इत्येतत्कथितं देवि गुह्याद्गुह्यतरं महत् ॥ ३३

राज्यं देयं शिरो देयं न देयं यस्य कस्यचित् ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ३४




॥ इति पूजायन्त्रः ॥



1. पूर्वादितो यजेद्विद्वानिन्द्रादीनमरेश्वरि । 2. व्याधिमृत्यू यजेत्ततः ।
3. भद्रकालीम् । 4. यजेत् । 5. यजेत् । 6. सालुवाभकम् ।

अथातोऽन्य[1]त्प्रकारेण पूजायन्त्र[2] मयोच्यते । दिव्यगन्धयुक्ते प्रशस्ते भस्मनि त्रिकोणाष्टदल द्वादशदल, षोडशदल, भूपुरद्वन्द्वात्मिकं[3] अरत्निमात्रचक्रमुद्धृत्य पुष्पाञ्जलित्रयं दत्वा वक्ष्यमाणरीत्या[4]छागबलि दत्वा स्ववामभागे सामान्यार्घ्यस्थापनं कुर्यात् ॥

## ॥ सामान्यार्घ्यस्थापनम् ॥

चन्दनादिना चतुरश्रं विलिख्य वहन् श्वासोर्ध्वं उदहस्ताभ्यां [5]नत्स्यमुद्रया त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं कृत्वा ओं "आधारशक्तये नमः" इति सम्पूज्य मूलमुच्चरन् श्रीशरभेश्वरपूजाया[6] सामान्यार्घ्याधारं स्थापयामीति संस्थाप[7] तन्मध्ये नम इति जलेनापूर्य तत्र "गङ्गेचेति" मन्त्रेण तीर्थान्यावाहय ओमिति गन्धादिभिः सम्पूज्य मूलेनाष्टधाभिमन्त्य धेनुयोनिमुद्रां [8]प्रदर्श्य (?) ॥

॥ इति सामान्यार्घ्यस्थापनम् ॥

*

---

1. अन्यप्रकारेण ।
2. पूजायन्त्रो ।
3. भूपुरद्वन्द्वात्मकं ।
4. छागबलिप्रकारो नात्र ग्रन्थे कुत्रापि प्रदर्शितः ।
5. मत्स्य ।
6. पूजायै पूजार्थमित्ति वा ।
7. संस्थाप्य ।
8. प्रदर्शयेत् ।

## ॥ अथ विशेषार्घ्यस्थापनम् ॥

अथ मन्त्रः विशोधनं यथा (?)

यन्त्रात्मनोर्मध्ये चन्दनानुक्षिप्य[1] चपुरस्रभूमौ मछ [मत्स्य] मुद्रया चतुरस्रवृत्तषट्कोणत्रिकोणात्मकमण्डलं विलिख्य तत्र वाम-दक्षिणाग्रेषु (?) सम्पूज्य – षट्कोणे षडङ्गैः सम्पूज्य – [सम्पूजयेत्]

पञ्चरत्नेन चतुष्कोणे सम्पूज्य

ग्लूं गगनरत्नाय नमः




स्लूं स्वर्गरत्नाय नमः

म्लूं मर्त्यरत्नाय नमः

प्लूं पातालरत्नाय नमः

न्लूं नागरत्नाय नमः इति चतुर्दिक्षु [मध्ये च] (सम्पूज्य)

कं कामगिरिपीठाय नमः

पं पूर्णगिरिपीठाय नमः

जं जालन्धरपीठाय नमः

उं उद्या (ड्याण)न पीठाय नम इति सम्पूज्य

---

1. विशेषार्घ्यस्थापनप्रस्तावे "अथ मन्त्रः विशोधनं यथा" इति पदानि मातृकायां दृश्यते ॥ चन्दनोक्षितचतुरस्रमण्डले मत्स्यमुद्रया चतुरश्रवृत्त-षट्कोणत्रिकोणं विलिख्य ॥

अस्त्रक्षालितमाधारं गृहीत्वा

श्रीशरभेश्वरविशेषार्घ्याधारं स्थापयामीति संस्थापयेत् । तत्र रं अग्निमण्डलाय धर्मप्रदाय दशकलात्मने श्रीशरभेश्वरविशेषार्घ्याधाराय[1] नमः (संपूजयेत् ।)

ओं ऐं ह्रीं श्रीं यं धूम्रार्चिष्कलायै नमः

,, रं ऊष्माकलायै नमः

,, लं ज्वलिनीकलायै नमः

,, वं ज्वालिनीकलायै नमः

,, शं विस्फुलिङ्गिनीकलायै नमः

,, षं सुश्रीकलायै नमः

,, सं सुरूपाकलायै नमः

,, हं कपिलाकलायै नमः

,, (लं) ळं हव्यवाहकलायै नमः

,, क्षं कव्यवाहकलायै नमः

ऐं अग्निं दूतं वृणीमहे ... तुम् – रां रीं रूं रैं रौं

रः रमलवरयूं इत्याधारे अग्निकलाभिः संपूज्य

1. श्रीशरभेश्वरविशेषार्घ्याधाराय नमः इति संपूजयेत् ।

हुं ब्रह्माण्डचषकाय स्वाहेति पात्रं प्रक्षाल्य, नमः इति गन्धादिना संपूज्य, धूपयित्वा, मूलमुच्चरन्, श्रीशरभेश्वरविशेषार्घ्य-पात्राय नमः इति पात्रं संस्थाप्य, अं सूर्यमण्डलाय अर्थप्रदद्वादश-कलात्मने श्रीशरभेश्वरविशेषार्घ्यपात्राय नमः इत्यभ्यर्च्य,

ओं ऐं ह्रीं श्रीं कं भं तपिनीकलायै नमः

,, खं बं तापिनीकलायै ,,

,, गं फं धूम्राकलायै ,,

,, घं पं मरीचि(ची)कलायै ,,

,, ङं नं ज्वालिनीकलायै ,,

,, चं धं रुचिकलायै ,,

,, छं दं सुषुम्नाकलायै ,,

,, [1]थं जं भोगदाकलायै ,,

,, [2]कं तं विश्वाकलायै ,,

,, [3]भं णं बोधिनीकलायै ,,

,, टं ढं धारिणीकलायै ,,

,, ठं डं क्षमाकलायै ,,

क्लीं आसत्येन रजसा ... पश्यन् ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः

हमलवरयूं इति सूर्यकलाभिः संपूज्य

---

1. जं थं । 2. झं तं । 3. जं णं बोधिनीकलायै नमः ३

श्रीशरभेश्वरविशेषार्घ्याय नमः इति मूलेन द्रव्यमापूर्य सं सोम-मण्डलाय कामप्रदषोडशकलात्मने श्रीशरभेश्वरहेतु[1]पात्रामृताय नमः इत्यभ्यर्च्य

ओं ऐं ह्रीं श्रीं अं अमृताकलायै नमः
,, आं मानदा ,, ,,
,, इं पूषा ,, ,,
,, ईं तुष्टि ,, ,,
,, उं पुष्टि ,, ,,
,, ऊं रति ,, ,,
,, ऋं धृति ,, ,,
,, ॠं शशिनी ,, ,,
,, ऌं चन्द्रिका ,, ,,
,, ॡं कान्ति ,, ,,
,, एं ज्योत्स्ना ,, ,,
,, ऐं श्री ,, ,, ,,
,, ओं प्रीति ,, ,,
,, औं अङ्गदा ,, ,,
,, अं पूर्णा ,, ,,
,, अः पूर्णामृता ,, ,,

1. विशेषार्घ्यामृताय नमः ।

सौः आप्यायस्व समेतुते ... संगथे, – सां सीं सूं सैं सौं सः समलवरयूं इति षोडशकलाभिः संपूज्य गन्धपुष्पाक्षतैरभ्यर्च्य हेतुयो[1]निमुद्रां प्रदर्श्य [2]पूजाद्रव्यपञ्चकशोधनं कुर्यात् ॥

(अथ द्रव्यपञ्चकशोधनानन्तरं चक्रोद्धारं कृत्वा पीठपूजां कृत्वा)[3]




## ॥ अथ चक्रोद्धारः ॥

त्रिकोणं विलिखेत्पूर्वं तद्बहिर्वृत्तमालिखेत् ।
तद्बहिश्चाष्टपत्रं तु द्वादशारं ततः परम् ॥ ३५

षोडशारं ततः पश्चात् ततो भूपुरयुग्मकम् ।
[4]त्रिकोणमध्ये देवेशं शरभं शालुवेश्वरम् ॥ ३६

चिरं ध्यात्वा ततो मन्त्री गुरुपादयुगं स्मरेत् ।
आवाहनादिषोडशोपचारपूजां कृत्वा ... ॥ ३७

चन्द्रं सूर्यं च वह्निं च त्रिकोणे विलिखेत्क्रमात् ।
भैरवं बडवाग्निं च दुर्गां कालीं पृथक् पृथक् ॥ ३८

त्रिकोणवृत्तमध्ये तु चत्वारि विलिखेत्क्रमात् ।
इन्द्रमग्निं यमं चैव निरृतिं वरुणं तथा ॥ ३९

---

1. धेनुयोनिमुद्रां प्रदर्श्य । 2. पूजाद्रव्येषु मुख्यतमस्य गन्धादिपञ्चकस्य विशेषार्घ्यामृतबिन्दुभिः शोधनं कुर्यादिति ॥ 3. कुर्यात् ॥ 4. भूपुरयुग्मकोल्लेखादनन्तरं तत्र यन्त्रे लेखनीयाक्षराणां विवरणमदत्त्वा पूजायाः कर्तव्यतात्र लिखिता ॥

वायुं सोमं तथेशानं दलेष्वष्टसु विन्यसेत् ।
पार्श्वद्वये [1]यजेद्देवि व्याधिमृत्युं [2]ततः परम् ॥ ४०

मदनं रक्तचामुण्डां मोहिनीं द्राविणीं तथा ।
शब्दाकर्षणिकां वाणीं रमां मायां पुलिन्दिनीम् ॥ ४१

शास्तारं क्षोभिणीं ज्येष्ठां द्वादशारे यथाक्रमम् ।
षोडशारे ततः पश्चात् षोडशेश्वर[3]देवता ॥ ४२

गणेश्वरं यमं स्कन्दं भैरवं च महादिशाम्[4] ।
त्वरितां वीरभद्रं च बडवानलभैरवम् ॥ ४३

महामायां यजेद्देवि वायव्यादिविदिक्षु च ।
आरभ्य चाग्रतो मन्त्री [5]बाह्लुष्टमातृका ॥ ४४

परितस्तु यजेत्सर्वान् [6]ककारार्द्यर्णदेवताः ।
एतद्यन्त्रं महादेवि सर्वकामार्थसिद्धये ॥ ४५

षोडशारे ततः पश्चात् [7]षोडशेश्वरदेवताः ।
अणिमाद्यष्टसिद्धिं च प्रादक्षिण्येन वै लिखेत् ॥ ४६

॥ इति यन्त्रम् ॥

✳

---

1. लिखेत् ॥ 2. व्याधिमृत्यू अथवा व्याधि मृत्यु इति ॥ 3. षोडश-स्वरदेवताः ॥ 4. महादिशि ॥ 5. ब्राह्म्याद्या अष्ट मातृकाः । 6. ककाराद्यर्णदेवताः ॥ 7. षोडशस्वरदेवताः ॥

यन्त्रे लेखनीयान्यक्षराणि विव्रियन्ते —

त्रिकोणमध्ये - बीजं देवेशमूलमन्त्रः ॥

सूर्यं चन्द्रं वह्नि - घ्रां घ्रीं ऐं ।

(वृत्तमध्ये) भं भ्रूं द्रुं क्षं

पार्श्वे व्याधिमृत्यू - ह्लां ह्लीं

अष्टदलेषु इन्द्रादि - लं रं भ्यं (?) [हं]

क्ष्यं (क्षं) वं यं सं (ह्लीं) [शं]

(द्वादशाक्षरम्) [द्वादशारे-] [1]क्रीं ह्लीं ह्लूं ह्लां

ह्लैं सं श्रीं ह्लम्रूं क्ष्रूं भ्यां क्ष्मूं मं

षोडशाक्षरे[2] अकारादिस्वराः ॥

अधिदैवतबीजाः - (ओं) सौं श्रौं ह्लौं घ्रां घ्रैं ज्मां पचयूं दैं ओं ऐं ओं कं ड्यों डं ङं ह्लों [4]पूर्वादिगं धं स्कं मं व्यायव्यादि[5] = ब्रैं घ्र्यां वं ईं इति देव बीजस्थापनं कृत्वा पीठपूजां प्राणप्रतिष्ठामावरणं[6] च कुर्यात् –

तद्यथा –

## ॥ अथ पीठपूजा ॥

चक्रं प्रोक्षणीपात्र[7]जलेन संप्रोक्ष्य पीठपूजां कुर्यात् –

ओं मं मण्डूकाय नमः

---

1. क्लीं इत्येव मदनबीजम् क्रीमित्यस्य कालीबीजत्वेनैव प्रसिद्धेः ॥
2. षोडशारे । 3. अधिदैवतबीजानि । 4. इति पूर्वादिदिक्षु ।
5. वायव्यादि । इदमपि उत्तरत्र ईं इत्यस्यानन्तरं वक्तव्यं प्रतिभाति ।
6. आवरणपूजां । 7. प्रोक्षणीपात्रस्थजलेन ।

ओं खं[1] कालाग्निरुद्राय नमः

,, आं अधारशक्त्यै ,,

,, कूं कूर्माय ,,

,, धं धरायै ,,

,, सुं सुधासिन्धवे ,,

,, श्वें श्वेतद्वीपाय ,,

,, सुं सुरवृक्षेभ्यो ,,

,, मं मणिमयहर्म्याय ,,

,, [2]... हैमयपीठाय ,,

[3],, ज्ञां ज्ञानाय ,,

,, वैं वैराग्याय ,,

,, ऐं ऐश्वर्याय ,,

,, अं अधर्माय ,,

,, अं अज्ञानाय ,,

,, अं अवैराग्याय ,,

,, अं अनैश्वर्याय ,,

मध्ये – ओं अं अनन्ताय नमः

,, तं तत्वमयपद्माय नमः

,, आं आनन्दमयकन्दाय नमः

---

1. कं । 2. हेममय पीठाय नमः । 3. ओं धं धर्माय नमः ।




ओं सं संविन्नालाय नमः
,, विं विकारमयकेसरेभ्यो नमः
,, पं प्रकृतिमयपत्रेभ्यो नमः
,, पं पञ्चाशद्वर्ण[1]कर्णिकायै नमः
,, सुं सूर्यमण्डलाय ,,
,, इं इन्दुमण्डलाय ,,
,, पं पावकमण्डलाय ,,
,, सं सत्वाय ,,
,, रं रजसे ,,
,, तं तमसे । ,,
,, अं [2]आत्मने ,,
,, वां वाम[3]शक्त्यै ,,
,, जें ज्येष्ठाशक्त्यै ,,
,, कां कांति[4]शक्त्यै ,,
,, कं काल[5]शक्त्यै ,,
,, कं [6]कालविकरण्यै शक्त्यै ,,
,, बं बलविकरण्यै शक्त्यै ,,
,, बं बलप्रमथिन्यै शक्त्यै ,,

---

1. वर्णाढ्य । 2. ओं आत्मने न० पं परमात्मने न० अन्तरात्मने न० ह्रीं ज्ञानात्मने न० । 3. वामशक्त्यै न० । 4. रौद्रीशक्त्यै नमः। 5. कालीशक्त्यै । 6. कलविकरण्यै ।

ओं सं [1]सर्वदमन्यै शक्त्यै नमः

,, मं मनोन्मन्यै शक्त्यै ,,

इति पीठं संपूज्य तन्मध्ये -

ओं नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः । [2]इत्यासनं संपूज्य (?) तत्र मूलेन मूर्तिं संपूज्य आवाहयेत् ॥

[3]प्राणायाम - ऋष्यादि कर षडङ्गन्यास - ध्यानादिकं कृत्वा [4]पुष्पाञ्जलिमानीय हृदयकमलमध्यस्थं साङ्गं सपरिवारं तेजोमयं [5]वामनासाद्वारेण समानीय पुष्पाञ्जलौ संस्थाप्य मूलमुच्चरन् साङ्गं सपरिवारं सायुधं सवाहनं (स) शूलिनीदुर्गासहितं श्री शरभेश्वरमावाहयामीति यन्त्रमध्ये पुष्पाञ्जलिं निक्षिप्य आवाहनादिमुद्रां [6]प्रदर्श [7]मूलमुच्चरन्

आवाहितो भव

स्थापितो भव

सन्निहितो भव

सन्निरुद्धो भव

[8]अवकुण्ठितो भव

---

1. सर्वभूतदमन्यै ॥ 2. देवस्य आसनं संपूज्येत्येवार्थः । 3. प्राणायामं कृत्वा मूलमन्त्र ऋष्यादि ... ... । 4. पुष्पाञ्जलिमादाय । 5, देवं शरभेश्वरं । 6, प्रदर्श्य । 7. ओं खें खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वशत्रु संहा(ह)रणाय शरभसालुवाय पक्षिराजाय हुं फट् स्वाहा आवाहितो भव इत्यादि । 8. सम्मुखो भव ।

[1]संकलीकृतो भव [2]इत्यावाह्य इति पीठपूजां[3]
अथ प्राणप्रतिष्ठां कुर्यात् – यन्त्रे ॥

तद्यथा –

लेलिहानमुद्रया हृदि हस्तं दत्वा त्रिर्जपेत् । ततः पुष्पाञ्जलित्रयं दत्वा त्रिः संपूज्य सन्तर्प्य मूलमन्त्रेणोपचारान् कृत्वा[4] - तत्र पाद्यार्घ्याचमनीयमधुपर्कार्घ्यहेतवे समान्यार्घ्यवदेकं पात्रं स्थापयित्वा –

| | | | |
|---|---|---|---|
| मूलान्ते (पूर्ववत्)[5] | इदं पाद्यं पादयोः | समर्पयामि | नमः |
| पुनर्मूलान्ते | इदमर्घ्यं हस्तयोः | ,, | ,, |
| ,, | इदमर्घ्यं हस्तयोः | ,, | ,, |
| ,, | इदं मधुपर्कं मुखे | ,, | ,, |
| ,, | पुनराचमनीयं मुखे | ,, | ,, |
| ,, | इदं स्नानं सर्वाङ्गे | ,, | ,, |
| ,, | इदमाचमनीयं मुखे | ,, | ,, |
| ,, | इदं वस्त्रम् | ,, | ,, |
| ,, | इदमाचमनीयं मुखे | ,, | ,, |

---

1. सुप्रीतो भव सुप्रसन्नो भव, वरदो भव ।
2. स्वामिन् प्रसीद प्रसीद, स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीतिभावेन यन्त्रे ऽस्मिन् सन्निधिं कुरु ॥
इतिसार्वजनीन आवाहनप्रकारः ॥ 3. प्राणप्रतिष्ठां कुर्यात् इत्येव सङ्गच्छते पीठपूजायाः निर्वर्तितत्वात् " पीठपूजां " इति उद्धारः न युज्यते ॥ 4. कुर्यात्
5. श्री शरभेश्वराय नमः इदं पाद्यम् इत्यादि सर्वत्र ॥

मूलमन्त्रान्ते - इदमुपवीतम् समर्पयामि नमः
(इदमाचमनीयं मुखे)
,, इदं भूषणम् ,, ,,
,, इदं गन्धादि ,, ,,
,, [1]इदमक्षतम् ,, ,,
,, इमानि पुष्पाणि ,, ,,
,, [2]इदं धूपम् ,, ,,
(इदमाचमनीयं मुखे)
,, [3]इदं दीपम् ,, ,,
(इदमाचमनीयं मुखे)
,, इदं नैवेद्यम् ,, ,,
(इदमाचमनीयं मुखे)
,, इदं ताम्बूलम् ,, ,,
,, [4]इदं दक्षिणम् ,, ,,
,, इदं फलम् ,, ,,

[5]इदं षोडशोपचारैः संपूज्य पुष्पाञ्जलित्रयं दत्वा आवरणपूजां [6]कृत्वा - तद्यथा-

## ॥ अथावरणपूजनम् ॥

### ॥ अथ प्रथमावरणम् ॥

मध्ये मूलेन त्रिः संपूज्य
[7]ईशानासुरवायव्य मध्ये दिक्षु च षडङ्गं पूजयेत् ॥

---

1. इमानक्षतान् । 2. इमं । 3. इमं । 4. इमां दक्षिणां । 5. इति । 6. कुर्यात् । 7. ईशानाग्न्यासुरवायव्यकोणेषु मध्ये दिक्षु चेति वक्तव्यम् ॥

मूलेन त्रिः सम्पूज्य

पुनर्मूलमुच्चार्य एता हृदयादिषडङ्गदेवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन दक्षिणहस्ते जलं समर्प्य

मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ॥

**इति प्रथमावरणम्**




*

## अथ द्वितीयावरणम्

ततस्त्रिकोणे वामदक्षिणोर्ध्वकोणेषु

ओं [1]श्रां चन्द्रं पूजयामि नमः

ओं [2]श्रां सूर्यं ,, ,,

ओं [3]... महावह्निं ,, ,,

त्रिकोणान्ते चतुर्दिक्षु

ओं भं भैरवं पूजयामि नमः (पुरतः)

ओं [4]श्रुं बडवाग्निं पूजयामि नमः (पश्चिमभागे)

---

*1, 2, 3* ओं अं चन्द्रं पू० ॥ ओं उं सूर्यं पू० ॥ ओं मं महावह्निं पू० इति अथवा ओं चं चन्द्रं पू० ओं सं सूर्यं पू० ओं रं महावह्निं इति वा युज्यते ॥ यन्त्रे लेखनीयतया वर्णितबीजाक्षराणि तु श्रां श्रीं ऐं इति ॥ *4,* श्रूं इति यन्त्रोल्लिखितं बीजम् ।

ओं क्षां कालीं पूजयामि नमः (दक्षिणभागे)

ओं दुं शूलिनीं दुर्गां पूजयामि नमः (वामभागे)

ओं द्रं (ह्रैं) मृत्युं[1] ,, ,,

(शेषं पूर्ववत्)

[मूलेन त्रिः सम्पूज्य –

पुनर्मूलमुच्चार्य एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः । पुष्पाञ्जलिं दत्त्वा

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।

इति सामान्यार्घ्योदकेन[2] दक्षिणहस्ते जलं समर्प्य

मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ।।]

इति द्वितीयावरणम्

*

## ।। अथ तृतीयावरणम् ।।

[3]अष्टदलेषु –

ओं लं (ळं) इन्द्रं सवज्रं पूजयामि नमः ।

,, रं अग्निं सशक्तिं पूजयामि नमः ।

,, [4]यं यमं सदण्डं ,, ,,

,, [5]क्षं निरृतिं सखड्गं ,, ,,

,, [6]...वरुणं सपाशं ,, ,,

---

1. व्याधेः पूजा ह्रां व्याधिं पू० । 2. देवस्य 3. अत्र सूर्योदग्दिशमारभ्य पूजा । 4. हं यमम् । 5. षं निरृतिम् । 6. वं वरुणम् ।।

ओं यं वायुं साङ्कुशं पूजयामि नमः
" सं सोमं सगदं " "
" [1]ह्रीं ईशानं सशूलं " " इति सम्पूज्य -

पुनर्मूलमुच्चार्य - शेषं पूर्ववत् ॥

मूलेन त्रिः सम्पूज्य

[मूलमुच्चार्य एताः तृतीयावरणदेवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन [देवस्य] दक्षिणहस्ते जलं समर्प्य ।

मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ।

॥ इति तृतीयावरणम् ॥



॥ अथ चतुर्थावरणम् ॥

द्वादशारे स्वाग्रादिप्रादक्षिण्येन [2]मदनाद्याः पूजयेत् ।

ओं क्लीं मदनं सबाणं पूजयामि नमः ।
" ह्रीं रक्तचामुण्डां सायुधां "

1. शं इशानम् इति सार्वत्रिकः सार्वजनीनः क्रमः ॥ 2. देवताः इति अध्याहारः ॥

ओं ह्रूं मोहिनीं सायुधां पूजयामि नमः

" द्रां द्राविणीं सायुधां (साङ्गां सपरिवारां[1] सायुधां सवाहनां सशिवां पू०)

" ह्लैं शब्दाकर्षिणीं सायुधां पूजयामि नमः

" [2]स (?) वाणीं "

" श्रीं रमां "

" [3]क्ष्यूं (ह्लीं) मायां "

" [4]ग्लूं (?) पुलिन्दिनीं "

" क्ष्म्रां शास्तारं सायुधं "

" क्ष्म्रूं क्षोभिणीं सायुधां "

" सं ज्येष्ठां सायुधां "

इति सम्पूज्य मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एता मदनाद्याः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः ।

इति पुष्पाञ्जलिं दत्वा

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥

---

1. मध्ये एवं द्राविणीविषये प्रोक्तमपि देवतान्तराणामपि विषये युक्तत एव ॥
2. ऐं क्लीं सौः इति वा ॥ 3. & 4. अत्र बीजानि शोधनीयानि सर्वत्र ॥ पूर्वतो भेदाः दृश्यन्ते ॥

इति सामान्यार्घ्योदकेन (देवस्य) दक्षिणहस्ते जलं समर्प्य मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ॥

॥ इति चतुर्थावरणम् ॥






## ॥ अथ पञ्चमावरणम् ॥

षोडशदले स्वाग्रादिप्रादक्षिण्येन पूजयेत् ।

ओं अं ओं ब्रह्माणं साङ्गं सपरिवारं सायुधं सवाहनं सशक्तिकं पूजयामि नमः इति सर्वत्र पूजयेत् ॥

ओं आं सौः [1]परां (साङ्गां सपरिवारां इत्यादि) पूजयामि नमः

| | | | | | |
|---|---|---|---|---|---|
| " | इं[2] | श्रौं विष्णुं | | साङ्गं सपरिवारं | " |
| " | ईं | ह्रीं मायां | | साङ्गां सपरिवारां | " |
| " | उं | धां (ग्लौं) वराहं | | साङ्गं सपरिवारं | " |
| " | ऊं | धें (लं) पृथिवीं | | साङ्गां सपरिवारां | " |
| " | हृं[3] | ज्यां विधिं | | साङ्गं सपरिवारं | " |
| " | ॠ | घं[4] शिवं | | " | " |

1. सौं, सौः इति वा । 2. ईं । 3. ऋं ।

4. बीजानि संशोधनमर्हन्तीति ज्ञायते, ग्रन्थे लेखनीयतया प्रचलितबीजाक्षरेभ्यः भेददर्शनात् ॥

ओं लॄं वयं नासत्यौ (साङ्गं सपरिवारं इत्यादि) पूजयामि नमः

" लॄं वै दस्रं " "

" एं ऐं वीरभद्रं " "

" ऐं औं भारतीं (साङ्गां सपरिवारां) "

" ओं कं शुकं (साङ्गं सपरिवारं) "

" ओं स्वौं शङ्करं " "

" अं डं रुद्रं " "

" अः ह्रीं कालरुद्रं " "

इति सम्पूज्य मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एताः ब्रह्माद्याः देवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन देवस्य दक्षिणहस्ते जलं समर्प्य मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ॥

॥ इति पञ्चमावरणम् ॥



## ॥ अथ षष्ठावरणम् ॥



प्रथमभूपुरे पूर्वादि । चतुर्दिक्षु

ओं गं गणपतिं साङ्गं पूजयामि नमः
,, यं यमं ,,
,, स्कं स्कन्दं ,,
,, भं भैरवं ,,

विदिक्षु वायव्यादि

ओं वें त्वरितां साङ्गां ,,
,, वूं वीरभद्रं साङ्गं ,,
,, वं बडवानलं भैरवं ,,
,, ईं महामायां साङ्गां ,,

बाह्यभूपुरे स्वाग्रादिप्रादक्षिण्येन ब्राह्म्याद्याः पूजयेत् ।

ओं आं ब्राह्मीं पूजयामि नमः
,, ईं माहेश्वरीं ,,
,, ऊं कौमारीं ,,
,, ऋं वैष्णवीं ,,
,, लृं वाराहीं ,,
,, ऐं माहेन्द्रीं ,,
,, औं चामुण्डां ,,
,, अः महालक्ष्मीं ,,

मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एता गणपत्याद्या देवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन (देवस्य) दक्षिणहस्ते जलं समर्प्य मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ॥

॥ इति षष्ठावरणम् ॥

✳

॥ अथ सप्तमावरणम् ॥



ततः परितः वृत्तक्रमेण [1]ब्रह्माद्या पूजयेत्

ओं कं ब्रह्माणीं पूजयामि नमः
" खं जाह्नवीं "
" गं गणेशं "
" घं भैरवं "
" ङं कालीं "
" चं भद्रकालीं "

1. ब्रह्माण्याद्याः ।

| | | | |
|---|---|---|---|
| ओं | छं | जातवेदसं | पूजयामि नमः |
| ,, | जं | अर्धनारीश्वरं | ,, |
| ,, | झं | परमात्मानं | ,, |
| ,, | ञं | पृथिवीं | ,, |
| ,, | टं | चण्डां | ,, |
| ,, | ठं | शुकं | ,, |
| ,, | डं | विष्णुं | ,, |
| ,, | ढं | बलभद्रं | ,, |
| ,, | णं | धनदं | ,, |
| ,, | तं | पराशक्ति | ,, |
| ,, | थं | दुर्गां | ,, |
| ,, | दं | निर्विकल्पं | ,, |
| ,, | धं | अग्निं | ,, |
| ,, | नं | नासत्यौ | ,, |
| ,, | पं फं | दस्रं (दस्रौ) | ,, |
| ,, | बं | भार्गवं | ,, |
| ,, | भं | ईश्वरं | ,, |
| ,, | मं | मदनं | ,, |
| ,, | यं | वायुं | ,, |
| ,, | रं | कृशानुं | ,, |
| ,, | लं | शुक्रं | ,, |

| | | | |
|---|---|---|---|
| ओं | वं | वरुणं | पूजयामि नमः |
| ,, | शं | शङ्करं | ,, |
| ,, | षं | द्वादशादित्यान् | ,, |
| ,, | सं | भारतीं | ,, |
| ,, | हं | सदाशिवं | ,, |
| ,, | ळं | इन्द्रं | ,, |
| ,, | क्षं | नृसिंहं | ,, |

इति सम्पूज्य मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एता ब्रह्माद्याः [ब्रह्माण्याद्याः] देवताः साङ्गाः सपरिवाराः सवाहनाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन देवस्य दक्षिणहस्ते जलं समर्प्य मम शान्तिदाः शुभदाः सन्तु इति पुष्पाञ्जलिं समर्प्य नमेत् ॥

॥ इति सप्तमावरणम् ॥

*

इत्थमावरणपूजां कृत्वा पाद्यार्घ्याचमनीयं दद्यात् ॥

## ॥ [1]समष्टिपूजा ॥

स्वगृह्योक्तविधिना विधाय ?[2]

---

1. सर्वावरणसहिताय श्री शरभेश्वराय इदं पाद्यमित्यादिरीत्या ।
2. होमविषयः आरब्धः, परमनुक्तः ॥

## ॥ अथ बलिदानम् ॥

तत्रेशानाऽऽग्नेयनिर्ऋतिवायव्यकोणेषु सामान्य (?)[1] मण्डल-चतुष्टयं कृत्वा

"ओं व्यापकमण्डलाय नमः" इति मण्डलचतुष्टयं सम्पूज्य तत्र साधारणं सदीपं सजलं सवान्नं पात्रचतुष्टयं निधाय "ओं वं वटुकाय (नमः) इति वटुकभैरवमावाह्य[2] "वं वटुकबलि-द्रव्याय नमः" इति बलिद्रव्यं सम्पूज्य "ओं ऐं ह्रीं श्रीं ओं एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभास्वर त्रिनेत्र ज्वाला-मुख सर्वविघ्नान्नाशय सर्वोपचारसहितं बलिं गृह्ण (गृह्ण) स्वाहा" इति वामाङ्गुष्ठानामिकाभ्यां (गन्धाक्षतं) धृत्वा [illegible][3][illegible]-रया बलिं हरेत् ॥

> बलिदानेन सन्तुष्टो वटुकः सर्वसिद्धिदः ।
> शान्ति करोतु मे नित्यं भूतवेतालसेवितः ॥

इति पुष्पाञ्जलिं दद्यात् ॥

॥ इति वटुकबलिः ॥

*

(अथ) आग्नेयमण्डले "यां योगिनीभ्यो नमः"

"भोः सर्वयोगिन्यः इहागच्छन्त्वित्यावाह्य गन्धादिभिः सम्पूज्य योगिनीबलिद्रव्याय नमः इति बलिद्रव्यं पूजयेत् ॥

> ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले वा तले वा ।
> पाताले वा स्थले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।

---

1. सामान्यार्घ्योदकेन । 2. गन्धादिभिः संपूज्य । 3. करदर्शित (दक्षकरदर्शित)

क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पातु[1] वीरेन्द्रवन्द्यः ॥

यां योगिनीभ्यो नमः स्वाहा सर्वयोगिनीभ्यो[2] फट् इति [3]वामङ्गुष्ठ-नामिकाभिर्बलिं हरेत् ॥

या काचिद्योगिनी रौद्रा सौम्या घोरपरात्परा ।
खेचरीं भूचरीव्योमचरी[4]प्रेतास्तु मे सदा ॥ ५०

इति पुष्पाञ्जलिं दत्त्वा नमेत् ॥

॥ इति योगिनीबलिः ॥

*

अथ निर्ऋतिमण्डले क्षेत्रपालाय नमः इति क्षेत्रपालमावाह्य गन्धादिभिः सम्पूज्य

क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्थानक्षेत्रपाल इहागत्य धूप-दीपादिसहितं बलिं (गृह्ण) स्वाहा इति वामाङ्गुष्ठतर्जनीभ्यां बलिं हरेत् ।

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः सकिङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ॥

॥ इति क्षेत्रपालबलिः ॥

*

अथ वायव्यमण्डले "गं गणपतये नमः" इति गणपतिमावाह्य गन्धादिभिः सम्पूज्य "गणपतिबलिद्रव्याय नमः" इति बलिद्रव्यं पूजयेत् ॥

---

1. पान्तु वीरेन्द्रवन्द्याः ॥
2. सर्वयोगिनीभ्यः फट् ॥
3. वामाङ्गुष्ठकनिष्ठानामिकाभिः ॥
4. प्रीतास्तु ॥

"गां गीं गूं गैं गौं गः गणपतये वरवरद सर्वान् वशमानय बलिं गृह्ण (गृह्ण) स्वाहा" इति वामाङ्गुष्ठमध्यमाभ्यां बलिं हरेत् ।

सर्वदा सर्वकार्याणि निर्विघ्नं साधयेन्मम ।
शान्तिं करोतु सततं विघ्नराजः सशक्तिकः ॥ ५२

इति पुष्पाञ्जलिं दद्यात् (दत्वा नमेत्)

॥ इति गणपतिबलिः ॥

*

ततः स्ववामभागे सर्वभूतबलिं दद्यात् ॥

सरासुरगणाः(द्या) सिद्धाः सर्वभूतगणाः इहागच्छन्त्वित्यावाह्य गन्धादिभिः सम्पूज्य "सर्वभूतबलिद्रव्याय नमः" इति बलिद्रव्यं पूजयेत् ।

"ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं" इति वामाङ्गुष्ठादिसर्वाङ्गुलीभिर्बलिं हरेत् ॥

भूता ये विविधाकारा दिवि भूम्यन्तरिक्षगाः ।
पातालस्थलसंस्थाश्च शिवयोगेन भाविताः ॥ ५४
क्रूराद्याः शतसङ्ख्याकाः पाखण्डाद्या व्यवस्थिताः ।
तृप्यन्तु प्रीतमनसा पूजां गृह्णन्त्विमं बलिम् ॥ ५५

इति पुष्पाञ्जलिं दद्यात् (दत्वा नमेत्)

॥ इति भूतबलिः ॥

*

ओं सर्वेभ्यो बलिदेवेभ्यो नमः इति सर्वमभ्यर्च्य नाराचमुद्रां बद्ध्वा

बलिदानेन सन्तुष्टाः क्षमध्वं बलिदेवताः ।
यथासुखं चिरं रन्तुं यथेष्टमुदिता वराः ॥ ५६

वटुकाद्याः सुराः सर्वे सर्वसिद्धिविधायिनः ।
शान्तिं पुष्टिं प्रयच्छन्तु प्रसादात्परमेशितुः ॥ ५७

इति स्तुत्वा मुद्रां विसृज्य प्रोक्षणीजलेनात्मानं प्रोक्षयेत् ।

॥ इति बलिदानविधिः ॥

*

ततः उत्तरापोशनं दत्त्वा नैवेद्यं विसृज्य करप्रक्षालन–आचमनादि(कं) दद्यात् ॥ [ततः ताम्बूलफलादिकं समर्प्य] (ततः) नीराजनं कुर्यात् ॥

## ॥ अथारात्रिकविधिः ॥

ततः स्वर्णादिपात्रे अष्टदलं विरच्य गोधूमपिष्टरचितान् नव दीपान् पात्रे संस्थाप्य मूलेन प्रज्वाल्य अष्टदिक्षु ब्रह्माद्या (देवताः) मध्ये च मूलेन सम्पूज्य अमृतीकृत्य अवकुण्ठ्य चक्रेण संरक्ष्य मूलेनाष्टधाऽभिमन्त्र्य जानुभ्यामवनिं गत्वा नीराजनं कुर्यात् ॥

समस्तदेवदेवेश परिवारगणावृत ।
आरात्रिकमिमं देव गृहाण मम सिद्धये ॥ ५८

इत्यारात्रिकमन्त्रेण परिवर्त्य भ्रमाकारेण परिभ्रामयेत् ॥

॥ इत्यारात्रिकविधिः ॥

*

ततः मूलमष्टोत्तरशतं जपेत् ॥

ततः[1] कवचस्तोत्रसहस्रनामादिपारायणं कुर्यात् ॥

अथ काम्यप्रयोगानि[2]लिख्यन्ते

उकारं पूर्वमालिख्य तद्बाह्ये वर्तुलं लिखेत् ।
तद्बाह्ये चतुरस्रं तु तद्बाह्येऽष्टदलं तथा ॥ ५९

तद्बाह्ये षोडशदलं तद्बाह्ये वृत्तमालिखेत् ।
तद्बाह्ये पञ्चकोणं च फट्कारं साध्यनाम च ॥ ६०

वर्तुले मूलमालिख्य स्वरान् षोडश पार्वति ।
वृत्तेनाभिमतं साध्यं बाणस्य[3] पञ्चकोणके ॥ ६१

(द्रां द्रीं क्लीं ब्लूं सः)



एवमालिख्य यन्त्रं तु तालपत्रे प्रयत्नतः ।
स्नुहिक्षीरे जले क्षिप्त्वा यन्त्रं तत्रैव निक्षिपेत् ॥ ६२

गुह्यो(गृहो)परि चिरं स्थाप्य वदार्थैः सर्वत्र शत्रवः ।
गृहं त्यक्त्वा पलायन्ते प्रसादात्सालुवेश्वरः[4] । ६३

साधके[5] सर्वसिद्धिः स्यात् रिपून्(पुः) देशान्तरं व्रजेत् ।
शालुवं पक्षिराजानां(?) यो ध्यायेल्लोकपूजितम् ॥ ६४

---

1. अनुबन्धे अतिदुर्लभसालुवेशकवचपाठः दत्तः साधकानां हिताय ।
2. प्रयोगाः ।
3. बाणस्येत्यस्य पञ्चबाणानां बीजानि इत्यर्थः ।
4. सालुवेशितुः ।
5. साधकस्य । रिपून् देशान्तरं प्रापयेत् इति भावः ।

शत्रूणां सर्वसङ्घातो नोत्पद्यन्ते[1] कदाचन ।
चन्दनं च सकर्पूरं कस्तूरीकुङ्कुमान्वितम् ॥ ६५

वामावर्ते[2] लिखेन्मन्त्रं शरभं चिन्तयेन्नरः[3] ।
ललाटे तिलकं कृत्वा त्रैलोक्यं मोहयेत्क्षणात् ॥ ६६

देवांश्चापि वशीकुर्यात् किं पुनर्मानवादयः ।
गोरोचनं च गोक्षीरं गोघृतं गोमयं तथा ॥ ६७

शन्यर्काङ्गारवारे तु मूलेनैव तु होमयेत् ।
देवासुरमनुष्याणां[4] स्त्रीपुंसां वशमानयेत् ॥ ६८

अजामाहिषिकं चैव नवनीतं तथा नरः ।
हुतेन[5] मूले पश्चांहे साध्नामपुरःसरम् ॥ ६९

साध्यो वश्यो भवेत्सत्यं क्षिप्रमेव न संशयः ।
[6][अनिष्टमानुषाणां च रुधिरं प्रेतवाससा ॥ ७०

संवेष्टच पुत्तलीं चैव साध्यनाम्ना विगर्भितम् ।
निखनेत्तत्र प्रेताय हृदये शिरसश्चलात् ॥ ७१

केशान्गृहीत्वा संवेष्टच पुत्तलीं प्राणपूर्वकम् ।
शवदाहस्थलेनैव निक्षिपेदाशु चालयेत् ॥] ७२

---

1. नोत्पद्यते । 2. वामावर्तं यथातथा । 3. चिन्तयन् ।
4. देवासुरमनुष्यांश्च स्त्रीपुंसान् । 5. हुते मूलेन ।
6. प्रयोगप्रतिपादकश्लोका अशुद्धाः ॥

सालुवं पक्षिराजानं यो ध्यायेच्च दिने दिने ।
जपेद्दशसहस्रं तु शतमष्टोत्तरं तु वा ॥ ७३

कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ।
मासान्तसमये प्राप्ते वैरिवंशक्षयो भवेत् ॥ ७४

कारस्करं च भल्लाततैलेनाष्टशतं हरेत्[1] ।
मासान्ते शत्रवस्तस्य पलायन्ते न संशयः ॥ ७५

[2]शमोवमादि (?) पयसा चाष्टोत्तरशतं हुनेन् ।
[3]दिनत्रय महेशानि सर्वरोगैः प्रमुच्यते ॥ ७६

विभीतकतरोरष्टप्रादेशपरिमाणकम् ।
यन्नाम्ना धारये[4]द्दण्डमष्टोत्तरशतं जपेत् ॥ ७७

मासान्ते मृत्युमाप्नोति यदि त्राता विधिः स्वयम् ।
अपामार्गस्य समिधा पायसं सघृतं हुनेत् ॥ ७८

रात्रौ सहस्रं मासान्ते नश्यन्ति च पदातिनः ।
पञ्चस्तुहिस्रमिद्भिर्यो याम्यास्या[5] सर्षपैस्तिलैः ॥ ७९

महानिशार्धे साहस्रं जुहुयांस्याद्दिवसे[6] निहि ? ।
पञ्चाहेमाः[7] प्रणश्यन्ति सगोत्राः शत्रवो भृशम् ॥ ८०

---

1. हुनेत् ॥ 2. दुरूहं पदमेतत् ॥ 3. दिनत्रयात् ॥ 4. धारयन् ॥
5. याम्याशः । 6. पदार्थः दुरूहः । हवनं दिवसे न कार्यमिति भावः स्यात् ।
7. पञ्चाहेन ।

सालुवं पक्षिराजानं पूजयेत्साधकोत्तमः ।
अष्टविंशतिसङ्ख्याकान् ब्राह्मणान् भोजयेत्सुधीः ॥ ८१

शुक्लप्रतिपदारभ्य पौर्णिमायां [1]तु नित्यशः ।
यो जपेदष्टसाहस्रं मुच्यते सर्वपातकैः ॥ ८२

शरभं सालुवं ध्यात्वा एतं विधिवदाचरेत् ।
पुत्तलीं च विधायाथ कुलालकरमृण्मयीम् ॥ ८३

वायुं सम्यग्विधानेन कृत्वा स्थाप्य समाहितः ।
स्नुहिक्षीरे तु संक्षिप्य स्पृष्ट[2]स्नदयुतं जपेत् ॥ ८४

उन्मत्तमूले निखनेत् अपस्मारी भवेत्तदा ।
सालुवं शिवरूपं च ध्यात्वा सम्यक् समाहितः ॥ ८५

निम्बमूलेन कृत्वा तु पुत्तलीं च यथाविधि ।
पुत्तल्यां वायुमारोप्य स्पृष्ट्वा तामयुतं जपेत् ॥ ८६

श्मशाने निखनेदेव पुत्तलीं [3]शत्रुचलायेत् ।
उन्मत्तमूले पुत्तल्यां वायुमारोप्य साधकः ॥ ८७

स्पृशं [4]जिघ्रायुतं मन्त्री ध्यात्वा शत्रूनतन्द्रितः ।
निक्षिपेच्छुष्कदेशे तु शत्रूणां चालनं भवेत् ॥ ८८

---

1. पूर्णिमान्तं ।
2. स्पृष्ट्वा । (स्पृशंस्)
3. शत्रु नाशने चालने इति वा ।
4. स्पृशन् जप्त्वाऽयुतं मन्त्री ।

शन्यर्काङ्गारवारे तु जपेदयुतसङ्ख्यया ।
त्रिदिनान्ते रिपून्बध्वा चालयेदाशु साधकः ॥ ८९

दूर्वाङ्कुरैर्घृताक्तैश्च गोमयेन विशेषतः ।
तिलान् लाजान्सर्षपांश्च मिश्रीकृत्य हुनेत्तदा ॥ ९०

त्रिदिनान्ते शत्रुसङ्घाः पलायन्ते न संशयः ।
पिष्टेन पुत्तलीं कृत्वा मूलेनैव तु पूजयेत् ॥ ९१

माषयुक्तं तु नैवेद्यं ताम्बूलं तु निवेदयेत् ।
लाक्षारसेन संयुक्तबिम्बस्य च शिरोगले ॥ ९२

साध्यनाम्ना च संयोज्य लिखित्वा तां च पुत्तलीम् ।
सदा यजेत्ततो वह्नौ समिद्भिः पिचुमन्दकैः ॥ ९३

[1]गणिकायाङ्गणे होमं कृत्वा चैव विधानतः ।
जपादयुतमात्रेण पलायन्ते न संशयः ॥ ९४

अर्कमूलं समादाय पुत्तलीं च यथाविधि ।
[2]तस्य प्राणस्य पवनं विदधीत यथोदितम् ॥ ९५

[3]तयाश्च हृदि देशे तु मायाबीजं समालिखेत् ।
तस्याः शिरसि[4]मालिख्य वह्निबीजं सबिन्दुकम् ॥ ९६

पादयोश्च तथालिख्य पृथ्वीबीजं भौम्भवम्[5] ।
उभयोः स्कन्धयोश्चैव वायुबीजं च भाग्भवम्[6] ॥ ९७

---

1. गणिकागृहाङ्गणे । 2. तत्र प्राणस्थापनं च । 3. तस्याश्च । 4. चालिख्य ।
5. & 6. वाग्भवम् ।

[1]भार्गवं वदने पृष्ठे श्रीबीजं भुवनेश्वरीम् ।
पूजां च विधिवत्कृत्वा नैवेद्यं च निवेदयेत् ॥ ९८

निखनेदर्कमूले च पलायन्तेऽथ शत्रवः ।
ततः शत्रुशरीरं च स्फोटकं पक्षिशालुवत्[2] ॥ ९९

सप्ताहाच्च यमस्थाने नीयन्ते सर्वशत्रवः ।
केवलं जपमात्रेण क्षीयन्ते शत्रवः स्वयम् ॥ १००

चतुरङ्गुलविस्तारं दशाङ्गुलसमायुतम् ।
श्मशानमृत्तिकायां तु पुत्तलीं कारयेद्बुधः ॥ १०१

श्मशानास्थि समादाय उन्मत्तरससंयुतम् ।
पुत्तलीहृदि खेङ्कारं पार्श्वे चिन्तामणिं लिखेत् ॥ १०२

मस्तके कामराजं च हंसबीजं च मूर्धनि ।
स्नुहिक्षीराभिषेकं च विधिवत्प्राणपूर्वकम् ॥ १०३

स्नुहिवृक्षस्यधोभागे[3] खनेत्प्रादेशमात्रकम् ।
शुक्लप्रतिपादारभ्य अष्टम्यान्ते[4] जपेत्सुधीः ॥ १०४

पराजिताः पलायन्ते शत्रवो नात्र संशयः ।
सालुवं पक्षिराजानं शरभं शिवरूपिणम् ॥ १०५

यो द्विजः सततं ध्यायेत् पलायन्ते च शत्रवः ।
खादिरीं पुत्तलीं कृत्वा पवनं च यथाविधि ॥ १०६

---

1. वाग्भवम् । 2. अशुद्धः पाठः । 3. वृक्षस्य अधोभागे इत्यर्थे अयं प्रयोगः ।
4. अष्टम्यन्तं जपेत् ।

तत्स्पृष्ट्वा चायुतं मन्त्री मुच्यते राजतस्करैः ।
पुत्तलीं खादिरे मूले निक्षिपेत्तस्य शत्रवः ॥ १०७

पुत्रमित्रकलत्रादींस्त्यक्त्वा देशान्तरं व्रजेत् ।
गच्छत्येव न सन्देहो [1]धूर्तिर्भैरवभाषितम् ॥ १०८

राजवृक्षस्य पुत्तल्यां भूबीजं स्मरवह्निना ।
वाग्भवं वायुबीजं च श्रीबीजं भुवनेश्वरीम् ॥ १०९

प्रादक्षिण्येन वेष्टव्यं पुत्तल्युपरि लेखितः ।
मूलेन राजवृक्षस्य समिद्धोमो विधीयते ॥ ११०

अष्टोत्तरसहस्रं च शतं अष्टोत्तरं च वै ।
हुनेच्च विधिवन्मन्त्रं [2]चतुःकण्ठविधानतः(?) ॥ १११

त्रिदिनान्ते च विद्वेषं शत्रूणां च परस्परम् ।
रिपवः सङ्क्षयं यान्ति पलायन्ते न संशयः ॥ ११२

॥ इत्याकाशभैरवकल्पे अरिखण्डे शारभप्रयोगविधिर्नाम
चतुश्चत्वारिंशः पटलः ॥



1, सत्यम् ।
2. चतुष्पात्रविधानतः । पटलसङ्ख्या यथामातृकं निर्दिष्टा ।

# ॥ अनुबन्धः ॥

*

## ॥ मालामन्त्रः ॥

ओं नमः पक्षिराजाय निशितकुलिशवरनखाय अनेककोटिब्रह्म-कपालमालालङ्कृताय सकलकुलमहानागभूषणाय सर्वभूतनिवारणाय सकलरिपुरम्भाटवीमोटनमहानिलाय शरभसालुवाय ह्रां ह्रीं ह्रूं प्रवेशय प्रवेशय आवेशयावेशय भाषय भाषय मोहय मोहय ह्रौं स्तम्भय स्तम्भय कम्पय कम्पय घातय घातय बन्धय बन्धय (भूतग्रहं बन्धय बन्धय रोगग्रहं बन्धय बन्धय उन्मत्तग्रहं बन्धय बन्धय वेतालग्रहं बन्धय बन्धय आवेशग्रहं बन्धय बन्धय अनावेशग्रहं बन्धय बन्धय क्रां ह्रां त्रोटय (त्रोटय) रोगग्रहं बन्धय बन्धय चातुर्थिकग्रहं बन्धय बन्धय भीमग्रहं बन्धय बन्धय अपस्मारग्रहं बन्धय बन्धय उन्मत्तग्रहं बन्धय बन्धय ब्रह्मराक्षसग्रहं बन्धय बन्धय भूचरग्रहं बन्धय बन्धय खेचरग्रहं बन्धय बन्धय वेतालग्रहं बन्धय बन्धय कूश्माण्डग्रहं बन्धय बन्धय स्त्रीग्रहं बन्धय बन्धय पापग्रहं बन्धय बन्धय विक्रमग्रहं बन्धय बन्धय व्युत्क्रमग्रहं बन्धय बन्धय अनावेशग्रहं बन्धय बन्धय क्रां ह्रां त्रोटय त्रोटय ग्रं वं हैं मारय मारय शीघ्रं मारय मारय मुञ्च मुञ्च दह दह पच पच नाशय नाशय (भञ्ज भञ्ज शासय शासय) सर्वदुष्टान् नाशय हुं फट् स्वाहा ॥

॥ इति मालामन्त्रः ॥

*

## ॥ अथ श्रीशरभेश्वरकवचम् ॥

शिव — (उवाच)

वक्ष्यामि शृणु ते देवि सर्वरक्षणमद्भुतम् ।
शारभं कवचं नाम चतुर्वर्गफलप्रदम् ॥ १

शरभश्रीसालुवपक्षिराजाख्यकवचस्य तु ।
सदाशिवः ऋषिश्छन्दो बृहती शरभेश्वरः ॥ २

देवता प्रणवं बीजं प्रकृतिः शक्तिरुच्यते ।
चतुर्वर्गार्थसिद्ध्यर्थे विनियोगोऽथ भावना ॥ ३

रक्ताभं सुप्रसन्नं त्रिणयनममृतोन्मत्तभाषाभिरामं
कारुण्याम्भोधिमीशं शरभमभयदं चन्द्ररेखावतंसम् ।
शङ्खध्वानाखिलाशाप्रतिहतविधिना भासमानात्मभावं
सर्वेशं सालुवेशं प्रणतभयहरं पक्षिराजं नमामि ॥ ४

मानसपूजा —

ॐ श्रीशिवः पुरतः पातु मायाधीशस्तु पृष्ठतः ।
पिनाकी दक्षिणं पातु वामपार्श्वं महेश्वरः ॥ ५

शिखाग्रं पातु मे शम्भुर्निटिलं पातु शङ्करः ।
ईश्वरो वदनं पातु भ्रुवोर्मध्यं पुरान्तकः ॥ ६

भ्रुवौ पातु मम स्थाणुः कपर्दी पातु लोचने ।
शर्वो मे श्रोत्रके पातु वागीशः पातु लम्बिकाम् ॥ ७

नासिके मे वृषारूढो नासाग्रं वृषभध्वजः ।
स्मरारिः पातु मे तालू चोष्ठयोर्भक्तवत्सलः ॥ ८

पातु मृत्युञ्जयो दन्तांश्चिबुकं पातु भूतराट् ।
परमेशः कपोलौ मे त्रिकं पातु कपालभृत् ॥ ९

कण्ठं पशुपतिः पातु शूली पातु हनू मम ।
स्कन्धद्वयं हरः पातु धूर्जटिः पातु मे भुजौ ॥ १०

भुजसन्धिं महादेवः ईशानो मे प्रकूर्परम् ।
मध्यसन्धिं जगन्नाथः प्रकोष्ठे चन्द्रशेखरः ॥ ११

मणिबन्धे त्रिणेत्रो मे भीमः पातु करस्थले ।
करपृष्ठे मृडः पातु रुद्रोऽङ्गुष्ठद्वयं मम ॥ १२

उमासहायस्तर्जन्यौ भर्गो मे पातु मध्यमे ।
अनामिके करालास्यः कालकण्ठः कनिष्ठिके ॥ १३

गङ्गाधरोऽङ्गुलीपर्वाण्यप्रमेयो नखानि मे ।
वक्षस्तत्पुरुषः पातु कक्षे दक्षाध्वरान्तकः ॥ १४

अघोरो हृदयं पातु वामदेवः स्तनद्वयम् ।
फालदृक् जठरं पातु नाभिं नारायणोऽव्ययः ॥ १५

गुह्यं प्रजाकरः पातु कुक्षिपार्श्वे महाबलः ।
सद्योजातः कटिं पातु पृष्ठभागं तु भैरवः ॥ १६

मोहनो जघनं पातु गुदं मम जितेन्द्रियः ।
ऊरूयुगं हरः पातु जानुयुग्मं भवान्तकः ॥ १७

हुङ्कारः पातु मे जङ्घे फट्कारो मम गुल्फके ।
खट्कारः पादपृष्ठे मे वषट्कारोऽङ्घ्रिणोस्तले (?) ॥ १८

स्वहाकारोऽङ्गुलीपार्श्वं स्वधाकारोऽङ्गुलीर्मम ।
त्वरितः सन्धिबन्धं मे रोमकूपाणि सिह्मजित् ॥ १९

त्वचः पातु मनोवेगः कालजित् रुधिरं मम ।
पुष्टिदः पातु मे मांसं मेदो मे स्वस्तिदोऽवतु ॥ २०

सर्वात्माऽस्थिचयं पातु मज्जां मम जगत्प्रभुः ।
शुक्लं बुद्धिकरः पातु बुद्धिं वाचामधीश्वरः ॥ २१

मूलाधाराम्बुजं पातु भगवान् शरभेश्वरः ।
स्वाधिष्ठानमजः पातु मणिपूरं हरिप्रियः ॥ २२

अनाहतं सालुवेशो विशुद्धिं जीवनायकः ।
सर्वज्ञानप्रदो देवो ललाटं मे सदाशिवः ॥ २३



ब्रह्मरन्ध्रं महादेवः पक्षिराजोऽखिलात्मवान् ।
सर्वलोकवशीकारः पातु मां परगर्वजित् ॥ २४

वज्रमुष्टिवराभीतिहस्तः कालाग्निसन्निभः ।
विजयासहितः पातु चैन्द्रीं ककुभमग्निजित् ॥ २५

शक्तिशूलकपालासिहस्तः सौदामिनीप्रभः ।
जयायुतो महाभीमः पातु वैश्वानरीं दिशम् ॥ २६

दण्डासिमुसलीसीरपाशाङ्कुशकराम्बुजः ।
क्षमान्तकोऽजितायुक्तः दिशं याम्यां सदाऽवतु ॥ २७

खड्गखेटाग्निपरशुहस्तः शत्रुविमर्दनः ।
अपराजितया युक्तः सदाव्यान्नैर्ऋतीं दिशम् ॥ २८

पाशाङ्कुशधनुर्बाणपाणिर्घोणीयुतोऽग्रगः ।
हरिद्राभोऽनिशं पायाद्वारुणीं दिशमात्मजित् ॥ २९

ध्वजछत्रगदाकुन्तभुजो दुर्गायुतोऽव्ययः ।
चण्डवेगः शिवः पातु सततं मारुतीं दिशम् ॥ ३०

गदाक्षस्रग्वराभीतिकराम्भोजः श्रिया युतः ।
कनकाभो महातेजाः पातु कौबेरकीं दिशम् ॥ ३१

त्रिशूलाहिकपालाग्निदोस्तलो विद्यया युतः ।
भस्मोद्धूलितसर्वाङ्गो दिशं पातु शिवप्रियाम् ॥ ३२

जपस्रक्पुस्तकाम्भोजकमण्डलुकराम्बुजः ।
ऊर्ध्वं पातु गिरा युक्तः सर्वभूतहिते रतः ॥ ३३

शङ्खचक्रगदाभीतिहस्तः पद्मायुतोऽव्ययः ।
नीलाञ्जनसमो नीलः पातालं पात्वनारतम् ॥ ३४

अनुक्ता विदिशः पातु साळुवो नारसिंह्यजित् ।
शरभः पातु सङ्ग्रामे युद्धे वैरिकुलान्तकः ॥ ३५

सर्वसौभाग्यदः पातु जाग्रत्स्वप्नसुषुप्तिषु ।
सर्वसम्पत्प्रदः पातु धनधान्यादिकं मम ॥ ३६

सन्तानदः सुतान् पातु पुत्रानायुष्करोऽनिशम् ।
बन्धून् वृद्धिकरः पातु गृहं सर्ववशङ्करः ॥ ३७

ग्रामं ग्रामेश्वरः पातु राज्यं पातु दिगम्बरः ।
राष्ट्रं शान्तिकरः पातु राजानं धर्मशासकः ॥ ३८

मार्गं दुष्टहरः पातु धर्मकर्माणि भैरवः ।
वटुकः पातु मे सर्वं व्यवस्थासु भयेषु च ॥ ३९

साधकः प्रणवं ध्यायन् ज्वलद्भिः प्रज्ज्वलद्वयम् ।
प्रत्यावृत्ति चतुर्थ्यन्तं (?) रक्ष रक्षेति चोच्चरेत् ॥ ४०

स्पर्शं स्पर्शं जपं कृत्वा प्रतिस्थानं समाहितः ।
प्रार्थयेदखिलं स्वेष्टं हृदिस्थं साळुवेश्वरम् ॥ ४१

ये ग्रामघातकाः क्रूराः कपटा दुर्मदा ग्रहाः ।
तस्कराः शत्रवः क्रुद्धा वधूसक्ताः पलाशनाः ॥ ४२

छद्माचाराः विटा भ्रष्टाः दिवाचर-निशाचराः ।
ते सर्वे पक्षिराजस्य पक्षवातवराहताः ॥ ४३

स्त्रीबालसहिताः क्षिप्रं पितृमातृकुलान्विताः ।
भग्नचित्ता गतस्थाना यान्तु देशान्तरं स्वयम् ॥ ४४

ये तु दुष्टग्रहा यक्षाः पिशाचा देवयोनयः ।
चतुष्षष्टिगणा दुष्टाः सप्तत्युन्मत्तका ग्रहाः ॥ ४५

अष्टाशीतिमहाभूताः सप्तकोटिमहाग्रहाः ।
नवतिज्वरभेदाश्च शतभेदाश्च कृत्रिमाः ॥ ४६

पञ्चाशद्गणनाथाश्च नियुता कृत्रिमा ग्रहाः ।
प्रेतारूढास्त्रयस्त्रिंशत्पिण्डदानपरायणाः ॥ ४७

अयुताः क्षुद्रभेदाश्च चत्वारिंशच्छिवाह्वयाः ।
द्वात्रिंशद्वह्निवक्त्राश्च विंशन्मार्जारवक्त्रकाः ॥ ४८

चतुष्षष्ट्याखुरूपाश्च ये चान्ये क्षुद्रयोनयः ।
ते सर्वे साळुवेशस्य शङ्खनिस्वानमोहिताः ॥ ४९

विषण्णाः स्खलितस्वान्ताः प्राणत्राणपरायणाः ।
गच्छन्त्वसत्प्रयोक्तारो देशान्तरमनिच्छया ॥ ५०

ये च मूषिकमार्जारशुनका रोगवृश्चिकाः ।
आशीविषशितव्याला व्याघ्रऋक्षाहिसूकराः ॥ ५१

गृध्राः श्येनाः खगाः काकदंशका भृशका[1] ग्रहाः ।
एते शरभहस्ताग्रनखक्षतविसोक्षकाः
स्रवद्रक्तच्छटासिक्ताः शिलातलनिताडिताः ॥ ५२

संभिन्नतनवः शीघ्रं नश्यन्त्वखिलदुश्चराः ।
न दशन्तूरगाः क्वापि नातिवातोऽपि वातु च ॥ ५३

न दहत्वसहो वह्निर्नायान्त्वापोऽपि चाधिकम् ।
न वर्षत्वतिवृष्टिश्च न पतत्वशनिः क्वचित् ॥ ५४

---

1. Mighty




नाक्रामत्वपमृत्युश्च नाप्युत्पातभयं क्वचित् ।
नापमृत्युर्भवेत्कुत्राप्यशुभं न क्वचिद्भवेत् ॥ ५५

न वदन्त्वसहं वाक्यं जन्तवो मम देशिक ।
नास्तु वैरं च जन्तूनां अन्योन्यं राज्यके मम ॥ ५६

भवन्तु सुखिनः सर्वे सर्वाः सन्तु पतिव्रताः ।
सर्वाः सूयन्तु सत्पुत्रान् पुत्रीश्च शुभलक्षणाः ॥ ५७

सर्वे देवाश्च नन्दन्तु सन्तु कल्याणकारणाः ।
राजन्वती मही चास्तु राजा भवतु धार्मिकः ॥ ५८

संस्रवन्तु पयो गावः फलन्त्वोषधयोऽधिकम् ।
भवन्तु फलदा वृक्षाः वृद्धिर्भवतु मेऽखिला ॥ ५९

ममास्तु तरसा नूनमात्मज्ञानमचञ्चलम् ।
कामक्रोधमहालोभसमदा मोहमत्सराः ॥ ६०

नाक्रामेयुश्च सर्वेश भगवन् करुणानिधे ॥ ६१

गौरीवल्लभ कामारे कालकूटविषाशन ।
मामुद्धरापदम्भोधेस्त्रिपुरघ्नान्तकान्तक ॥ ६२

साळुवेश जगन्नाथ सर्वभूतहिते रत ।
त्राहि मां तरसा घोरान्दुष्टान्नाशय नाशय ॥ ६३

कालभैरव विश्वेश विश्वरक्षापरायण ।
रक्ष मूषिकचोरेभ्यो धान्यराशिं च मे विभो ॥ ६४

पक्षिराज महादेव प्रणतार्तिविनाशन ।
तस्करेण हृतं वस्तु द्रुतं दापय दापय ॥ ६५

ये मर्मघातिनः क्षुद्राः छिद्रोपद्रवकारकाः ।
सर्वाचारपरित्यक्ताः मानहीनाश्च रोधकाः ॥ ६६

ते सर्वे साळुवेशस्य मुसलायुधचूर्णिताः ।
नश्यन्तु निमिषार्धेन पावकावृततूलवत् ॥ ६७

ये जनद्रोहिणोऽल्पाश्च दुरालोचितभाषिणः । ६८

सत्कर्मविघ्नकर्तारश्चासत्कर्मपरा नराः ।
ते साळुवेशहस्ताग्रहस्तनिर्भिन्नदेहिनः ॥ ६९

पतन्तु भूतले याम्यां प्राणास्तेषां प्रयान्तु वै ॥ ७०

त्वदङ्घ्रिध्याननिर्दग्धपापकोशाय मे शिव ।
मह्यं द्रुह्यन्ति ये तेषां विभवानि क्षयन्त्वरम् ॥ ७१

त्वदाचापरं भक्तं साधकं मां विवेकिनम् ।
आक्रामन्ति च सङ्ग्रामे ते गच्छन्तु पराहताः ॥ ७२

त्वदीयेनैव मार्गेण चरतां जपतां सदा ।
ये वदन्ति परीवादं भ्रान्ताः शीघ्रं भवन्तु ते ॥ ७३

त्वद्दासमुख्यं मां धीरं तर्जयन्ति बलाच्च ये ।
मनसा येऽवमन्यन्ते तत्स्वान्तं भ्रमतु क्षणात् ॥ ७४

मनसा कर्मणा वाचा ये कुर्वन्त्यतिदुःसहम् ।
ते महाशोकरोगाब्धौ पतन्त्वाशु शिवाज्ञया ॥ ७५

मदीयानि पदार्थानि (?) ग्रहीतुं योऽवलोकते ।
तत्क्षणादेव नष्टाक्षो भवत्वाशु शिवाज्ञया ॥ ७६

मदीयद्रव्यमादाय ये गच्छन्ति हि तस्कराः ।
सिह्मारिपाशसंबन्धात् ते चरन्तु प्रदक्षिणम् ॥ ८७

सीमान्तर(ा)गताश्चोरा गृहीतद्रव्यसञ्चयाः ।
अवशावयवास्ते च गच्छन्तु शरभाज्ञया ॥ ७८

तस्करा येऽपगृह्णन्ति मम धान्यधनादिकम् ।
पक्षिराट्[1]कोडिकाकृष्टाः समागच्छन्तु ते द्रुतम् ॥ ७९

समाहृतपदार्थाढ्या देशातीताश्च तस्कराः ।
शरभेशहलाकृष्टास्त आगच्छन्तु सत्वरम् ॥ ८०

शान्तं विवेकिनं भक्तं त्वदङ्घ्रिध्यानतत्परम् ।
द्रुह्यन्ति य इह प्राणास्तेषां यान्तु यमं शिव ॥ ८१

षट्त्रिंशत्कोष्टके यन्त्रे रेखाशूलादिसाध्यके ।
स्वेच्छामन्त्रं लिखित्वा तु जपेदाराध्य साधकः । ८२

उदङ्मुखः सहस्रं तु रक्षणाय जपेन्निशि ।
नष्टाहरणके पञ्चरात्रं पश्चिमदिङ्मुखः ॥ ८३

मरणे सप्तरात्रं तु दक्षिणाभिमुखो जपेत् ।
रोगनिग्रहणे चाष्टरात्रमाग्नेयदिङ्मुखः ॥ ८४

इति गुह्यं महामन्त्रं परमं सर्वसिद्धिदम् ।
शरभेशाख्यकवचं चतुर्वर्गफलप्रदम् ॥ ८५

---

1. कोडिका chest ।

प्रत्यहं प्रतिपक्षं वा प्रतिमासमथापि वा ।
यो जपेत् प्रतिवर्षं वा वरेण्यः स शिवो भवेत् ॥ ८६

एवं हि जपतः पुंसः पातकं चोपपातकम् ।
तत्सर्वं लयमाप्नोति रविणा तिमिरं यथा ॥ ८७

दशाब्दं यो जपेन्नित्यं प्रातरुत्थाय साधकः ।
सर्वसिद्धिं समाश्रित्य देहान्ते स शिवो भवेत् ॥ ८८

त्रिकालं ध्यानपूर्वं तु जपेद् द्वादशवार्षिकम् ।
स देवि कायेनानेन जीवन्मुक्तो भवेच्छिवे ॥ ८९

शतवारं जपेन्नित्यं मण्डलं यो वरानने ।
सोऽणिमादिगुणान् प्राप्य विचरेत्स्वेच्छया सदा ॥ ९०

अतलादिधरण्यन्तभुवनेषु तथोपरि ।
विचरेत्कामगः सर्वैः पूज्यमानो यथासुखम् ९१

त्रिमासं यो जपेन्नित्यमष्टोत्तरसहस्रकम् ।
सहसा शरभेशस्य सारूप्यं लभतेऽम्बिके ॥ ९२

षण्मासं यो जपेदेवं प्रयतस्तु दृढव्रतः ।
मद्रूपधारकैर्मर्त्यैः सहसिद्धिप्रदायकैः ॥ ९३

मम लोके तु संपूज्यो विष्णुलोके तथैव च ।
ब्रह्मलोके च रमते सर्वत्र न निवार्यते ॥ ९४

इन्द्राग्नियमरक्षेश(?)जलेशपवनैः सदा ।
सोमेशानकलक्ष्मीशैर्दिशां पालैः स पूज्यते ॥ ९५

आदित्यसोमपृथ्वीजबुधश्रीगुरुभार्गवैः ।
पूज्यते स ग्रहैः सर्वैः शनिना राहुकेतुभिः ॥ ९६

भृग्वङ्गिरःपुलस्त्यैश्च पुलहादिमरीचिभिः ।
दक्षकाश्यपक्रत्वब्जयोनिभिः स च पूज्यते ॥ ९७

भैरवैर्वसुभी रुद्रैरादित्यैर्वालखिल्यकैः ।
दिग्गजैश्च महानागैर्दिव्यास्त्रैर्दिव्यवाहनैः ॥ ९८

माहेश्वरैर्महारत्नैः कामधेनुसुरद्रुमैः ।
सरिद्भिः सागरैः शैलैर्देवताभिस्तपोधनैः ॥ ९९

दानवैः राक्षसैः क्रूरैः सिद्धगन्धर्वकिन्नरैः ।
यक्षविद्याधरैर्नागैरप्सरोभिः स पूज्यते ॥ १००

अपस्मारग्रहैर्भीमैरुन्मत्तैर्ब्रह्मराक्षसैः ।
वेतालैः खेचरैः क्रूरैः कूश्माण्डै राक्षसग्रहैः ॥ १०१

ज्वालावक्त्रैस्तमोरूपैः स्त्रीग्रहैः पापविक्रमैः ।
भूतप्रेतपिशाचाद्यैर्ग्रहैः सर्वैः स पूज्यते ॥ १०२

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः ।
पशुपक्षिमृगव्यालैः पूज्यते सर्वजन्तुभिः ॥ १०३

किमत्र बहुना देवि तव वक्ष्ये यथातथम् ।
मया च विष्णुना चैव विश्वकर्त्रा च पाल्यते ॥ १०४

भवत्या च गिरा लक्ष्म्या ब्रह्माण्याद्यष्टमातृभिः ।
गणेश्वरादियोगीन्द्रैर्योगिनीभिश्च पाल्यते ॥ १०५

य इदं प्रजपेद्भक्त्या चासाध्यं नैव विद्यते ।
कवचेन्द्रं महामन्त्रं जपेत्तस्मादनुत्तमम् ॥ १०६

उच्चाटने भण्डवक्त्रो विद्वेषे राक्षसाननः ।
प्रागाननोऽभिवृद्धौ च सर्वेष्वीशानदिङ्मुखः ॥ १०७

यो जपेत्कवचं नित्यं त्रिकालं ध्यानपूर्वकम् ।
सर्वसिद्धिमवाप्नोति सहसा साधकोत्तमः ॥ १०८

देव देव महादेव शिव कारुण्यवारिधे ।
पाहि मां प्रणतं स्वामिन् प्रसीद सततं मम ॥ १०९

यत्कृत्यं तन्नकृतं
यदकृत्यं कृत्यवदाचरितम् ।
उभयोःप्रायश्चित्तं
शिव तव नामाक्षरद्वितयम् ॥ ११०

॥ इति श्रीशरभेश्वरकवचम् ॥



APPENDIX

सभाष्यम्

# ॥ निग्रह–दारुण–सप्तकम् ॥

॥ श्री गणेशाय नमः ॥

भाष्यम्

'यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुत्या उत्पत्तिस्थिति-संहारा ब्रह्मण एव धर्माः श्रूयन्ते । उत्पत्तिम् आश्रित्य कर्मकाण्ड-प्रवृत्तिः, स्थितिम् आश्रित्य उपासनामार्गो भक्तिमार्गो वा, संहारम् आश्रित्य ज्ञानकाण्ड इति त्रिदेवनिर्णये व्याख्यातम् । इदम् एव आश्रित्य तस्य च ब्रह्मविष्णुरुद्रादिसंज्ञा च क्रमेण भवति । अत्र च दारुणसप्तकनामानि–निग्रहदारुणसप्तकम् इति च पूर्णनाम्नि स्तोत्रे संहारार्थकं भगवच्छिवपरं तत्त्वं निर्णीतम्, तच्च ज्ञानमार्गप्रधान योगसाधनकम्, ज्ञानम् अग्नित्वेन च स्वीकृतं, गीतायां यथा— 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' । अविद्यारूपध्वान्ता-वस्थायां कामक्रोधलोभात्मकान्येव "सर्वकर्माणि" कार्यकारणभाव-माश्रित्योक्तानि । प्रतिकूलकारित्वेन च यथा इम एव शत्रुपदवाच्या उच्यन्ते, तथाऽन्तिमे पद्ये दर्शयिष्यामः । एतेषामेव मारणार्थं पलायनार्थं वा स्तोत्रविनियोगः । नच शत्रुपदेनाऽत्र लौकिकशत्रूणां ग्रहणमिति वाच्यं चतुर्थश्लोकविपरीतत्वात् । 'नमस्ते रुद्र मन्यवे' इति भाष्ये अग्निरूपेण रुद्रः स्तुतः । ऋग्वेदे अग्ने रुद्रत्वमतिविशदम् । अत एव संहारभावसिद्धिः । मन्योराग्नेयभावस्य प्रसिद्धत्वात् ।

## मूलम्

ध्यानम् —

चन्द्रार्काग्नित्रिदृष्टिः कुलिशवरनखश्चञ्चलोऽत्युग्रजिह्वः,
काली दुर्गा च पक्षौ हृदयजठरगो भैरवो बाडवाग्निः ।
ऊरूस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः,
संहर्ता सर्वशत्रून् स जयति शरभः शालुवः पक्षिराजः ॥

## भाष्यम्

चन्द्रार्काग्नित्रिदृष्टिः विधुसूर्याग्निनेत्रवान् विराड्रूपी भगवान् । कुलिशवरनखः वज्रसदृशनखः, इत्येनेन भोगसम्पादने क्षमत्वं सूचितम् । चञ्चलः प्रतिक्षणं क्रियाशीलः । अत्युग्रजिह्वः अत्युग्राः प्रचण्डाः सप्त जिह्वा यस्याऽसौ, कर्मणां फलप्रदानसाधनत्वेन मुण्डके प्रसिद्धाः काली दुर्गा च पक्षौ । काली कालस्य सर्ववस्तुनियामिका शक्तिः । दुर्गा दुःखेन गन्तुं योग्या सर्वदेवमयी पराशक्तिः । श्रीश्च ते लक्ष्मीश्च 'अहोरात्रे पार्श्वे' इतिवत् पक्षौ । इमे द्वे शक्ती भगवतः पक्षस्थानीये जगद्रूपकार्यकरणे आश्रयभूते । हृदयजठरगः हृदयगतं जठरं वैश्वानरं गच्छतीति हृदयस्थानीयो वैश्वानररूपः बाडवाग्निः, जलेऽपि तस्य ज्वलनस्वभावः, सर्वदा विद्यमानत्वात् । भैरवो नित्योद्यमशीलः । 'उद्यमो भैरव' इत्युक्तत्वात् शैवसूत्रे । ऊरूस्थौ व्याधिमृत्यू व्याधिश्च मृत्युश्च तौ पापिनां कृते कामक्रोधरतानां मूढानां कृते आवश्यकत्वात् । शरभवरखगः शृणातीति शरभः मूलाज्ञान-निवर्तकः स चासौ वरश्च । खगः खे गच्छतीति आकाशवद् व्यापन-शीलः, खं बीजं, तेन गम्यते लक्ष्यते इति वा खगः । खं बीज

भगवतः शरभस्य प्रसिद्धम् । चण्डवाताऽतिवेगः चण्डवायुरिव अतिवेगः भक्तानां रक्षणे शीघ्रगामी सर्वातिशायित्वात् । 'तदेजदिति' मन्त्रानुसारं सर्वशत्रून् कामक्रोधादीन् संहरतीति संहर्ता विनाशकः । पक्षिराजः पक्षिणां जीवानां राजा पक्षिराजः समासान्तः टच् । 'वैनतेयश्च पक्षिणाम्' इत्युक्तत्वात् । शालुवः शालते शोभते इति शालुवः । उणादित्वात् साधुः । सर्वशोभासम्पन्नः । क्वचिद् दन्त्यादिः । सार दौर्बल्ये 'रलयोर्न भेदः' इत्यनेन निष्पत्तिः । सारयति शत्रूणां दौर्बल्यं सम्पादयतीति सालुवः । षल् गतावित्यनेन वा । चण्डवातातिवेग इत्यनेन गतिशीलत्वस्य प्रतिपादनाच्च । क्वचित् साल्व इत्यपि पाठो दृश्यते । शरभः जयति सर्वोत्कर्षेण वर्ततेतराम् इत्यर्थः ।

आध्यात्मतत्त्वसाक्षात्कारलब्धये कामस्य प्रधानं शत्रुत्वम-भिलक्ष्य स्तोतुमुपक्रमन्नाह कोपोद्रेकेति । यतः रुद्ररूपिणः शिव-स्यैव कामदाहे प्रसिद्धिः । समाधिविघ्नविधायिनं काममेवाह हन्तुं भगवान् श्रीकृष्णः–

'जहि शत्रुं महाबाहो कामरूपं दुरासदम्' इति ।

### मूलम्

कोपोद्रेकातिनिर्यन्-निखिलपरिचरत्-ताम्रभारप्रभूत
ज्वालामालाग्रदग्धस्मरतनुशकलं त्वामहं शालुवेश ।
याचे त्वत्पादपद्मप्रणिहितमनसं द्वेष्टि मां यः क्रियाभिः,
तस्य प्राणप्रयाणं परशिव भवतः शूलभिन्नस्य तूर्णम् ॥ १

भाष्यम्

कोपस्य क्रोधात्मकाग्नेयरूपस्य उद्रेकः वृद्धिःतया अतिनिर्यत् निर्गच्छत् । निखिलेषु कामजन्यपदार्थेषु परिस्वरत् परितः प्रसरणं कुर्वत् । ताम्रसारवत् प्रभूतं रक्तवर्णवद् राशिभूतम् आग्नेयस्य रक्तवर्णत्वात् । ज्वालामालाग्रदग्धम् ज्वालाया माला अग्निरूपस्य ज्ञानस्य माला अविच्छिन्नप्रवाहरूपा वृत्तिर्गृह्यते । तदग्रेण प्रधानेन दग्धं भस्मीकृतं स्मरतनुसकलं कामशरीरसाकल्यं येन तं दग्ध-कामदेहं त्वाम , हेशालुवेश अहं याचे प्रार्थये । यथा त्वमकार्षीः तथाऽहमपि कुर्यामिति भावनया त्वत्पादपद्मप्रणिहितमनसं त्वच्च-रणारविन्दार्पितचित्तं मां यः कामः क्रियाभिः स्वव्यापरैः द्वेष्टि अप्रीतिं जनयति । परशिव भवतः तव शूलभिन्नस्य शूलेन भिन्नस्य त्रिविधतापद्वैधीभावमापन्नस्य तस्य कामस्य प्राणप्रयाणं विनाशं तूर्णं शीघ्रं याचे इति पूर्वेण संबन्धः ॥

सर्वाऽनर्थस्य काममूलकत्वात् तन्निवृत्तौ सामर्थ्यविशेषमाह शम्भो इति—

मूलम्

शम्भो त्वद्हस्तकुन्तक्षतरिपुहृदयान्निःस्रवल्लोहितौघं,
पीत्वा पीत्वाऽतिदीर्घा दिशि दिशि विचरास्त्वद्गणाश्चण्डमुख्याः ।
गर्जन्तु क्षिप्रवेगा निखिलजयकरा भीकराः खेलनोलाः,
संत्रस्ताब्रह्मदेवाः शरभ खगपते त्राहि नः शालुवेश ॥ -२

भाष्यम्

शं कल्याणं भावयतीति शम्भुः शिवः सम्बोधने शम्भो । त्वद्हस्ते धृतः कुन्तः । कुं पृथिवीतत्त्वमुनत्तीति । उन्दी क्लेदने

बाहुलकात् तः शकन्ध्वादिः । तस्मात् क्षतं विदीर्णं यद् रिपुहृदयं तस्मात् निःस्रवन्तं निस्सरन्तं लोहितौघं रक्तप्रवाहं षट्चक्रभेदमापाद्य रक्तवर्णममृतप्रवाहं पीत्वा पीत्वा मुहुर्मुहुः पानं विधाय अतिदीर्घा बलिष्ठाः अमृतस्य रक्तवर्णत्वात् । पादुकापञ्चके स्वीकृतमेतत् । त्वद्गणाश्चण्डमुख्याः चण्डभावप्रधाना दश प्राणाः । 'सहचराः प्राणाः' इति भगवत्पादाचार्याः । दिशि दिशि विचराः सर्वत्र गतिमन्तः क्षिप्रवेगा प्रसरणशीलाः प्राणनिरोधे श्रमराहित्यम् अनेन गम्लते । अत एव निखिलजयकराः निखिलेषु इन्द्रियगणेषु जयकराः विजयप्रदाः । भीकराः भियं कुर्वन्तीति, कामगणानां त्रासकारिणः । खेललोलाः खेलेन लोलाः श्वासप्रश्वासक्रियया चञ्चलाः । सन्त्रस्ताब्रह्मदेवाः सन्त्रस्ता आब्रह्मदेवा बुद्धीन्द्रियाणि यैस्ते योगिनः गर्जन्तु विजयिनो भवन्तु । प्रश्नोपनिषद्युक्तप्राणकथाऽनुसर्तव्या । हे शरभ खगपते शालुवेश नः अस्मान् त्राहि रक्ष । कामस्याऽनङ्गत्वादपि अङ्गारोपवत् कथनसुलभेन बोधाय । यथा मनुः – नीरूपस्याऽपि दण्डस्य रूपम् ।

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ॥

अ० ७३४ । २०

सर्वव्यापित्वगुणैः स्तुवन् स्वाभिलषितमाह सर्वाद्यमिति ।

मूलम्

सर्वाद्यं सर्वनिष्ठं सकलभयकरं त्वत्स्वरूपं हिरण्यं,
याचेऽहं त्वाममोघं परिकरसहितं द्वेष्टि मां यः क्रियाभिः ।

श्रीशम्भो त्वत्कराब्जस्थितकुलिशकराघातवक्षःस्थलस्य ,
प्राणाः प्रेतेशदूत ग्रहगणपरिखाः क्रोशपूर्वं प्रयान्तु ॥ -३

**भाष्यम्**

हे प्रेतेशदूत, प्रेतेशो भगवान् शिवः तस्य दूतः वार्ताहरः प्रापकः सम्बोधने रूपमिदम् । गुरुरूपेण तत्तत्त्वोपदेष्टा । सर्वाद्यं सर्वप्रमुखं सर्वनिष्ठं सर्वस्मिन् नितरां तिष्ठतीति सर्वव्यापी । कलया सहितं सकलभयकरं पापिनां त्वस्वरूपं कम्पनाद् इत्यधिकरणोक्तम् । महद् भयमुद्यतमित्यादि । हिरण्यं हिरण्यवर्णं परिकरसहितं सर्वसाध्यसाधनैकनीडम् अमोघं सफलं सत्यस्वरूपम् । श्रीशम्भो श्रिया सहितः शम्भुः सम्बोधने श्रीशम्भो । यः कामः क्रोधो लोभो वा क्रियाभिः स्वस्वव्यापारैः मां द्वेष्टि प्रीत्यभावमुत्पादयति । अतः अहं त्वां भवन्तं याचे प्रार्थये यत् त्वत्कराब्जस्थितेन कुलिशेन शासनात्मकदण्डभूतेन कराघातेन वक्षःस्थले हृदये यस्य तस्य प्राणाः प्रकर्षेण चेष्टन्ते इति प्राणव्यापाराः ग्रहगणपरिखा ग्रहगणेन स्वानुकूलग्रहैः रक्षिता अपि क्रोशपूर्वं प्रयान्तु दूरीभवन्तु । ते स्वव्यापारकरणे निष्फलाः सन्तु इत्यभिप्रायः ॥

"यो मां द्वेष्टि यं च वयं द्विष्मः" "शरभं ते शुगृच्छन्तु यं द्विष्मस्तं ते शुगृच्छन्तु (य० १३) इति मन्त्राभ्यां यदुक्तं, तत् कथयति द्विष्म इति ।

**मूलम्**

द्विष्मः क्षोण्यां वयं हि तव पदकमलध्याननिर्धूतपापाः,
कृत्याकृत्यैर्विमुक्ता विहगकुलपते खेलया बद्धमूर्ते ।

तूर्णं त्वत्पादपद्मप्रधृतपरशुना तुण्डखण्डीकृताङ्गः,
सद्द्वेषी यातु याम्यं पुरमतिकलुषं कालपाशाग्रबद्धः ॥ ४

**भाष्यम्**

द्विष्मः अप्रीतिं कुर्मः संसारविषयं वैराग्यार्थम् । हे विहग-कुलपते पक्षिराज, खेलया लीलया बद्धमूर्ते गृहीतविग्रह, क्षोण्यां पृथिव्यां हि निश्चयेन तव पदकमलध्याननिर्धूतपापाः तव पदकमल-ध्यानेन चिन्तनेन निर्धूतपापाः सर्वदोषरहिताः शुद्धाः । "योगिनः कर्म कुर्वन्ति — आत्मशुद्धये" इति गीता । कृत्याकृत्यैर्विमुक्ताः कृत्यायाः कृत्यानि मारणोच्चाटनादीनि कर्माणि तैर्विमुक्ताः रहिताः सन्तः । एतेन मारणोच्चाटनादिषु अयं स्तवो विनियुज्यते इत्यज्ञानमूलकमेव सिध्यति तद्राहित्यविधानात् प्रमाणाभावाच्च ।

अथ च कृत्याकृत्यैर्विमुक्ता इत्यनेन कृत्यानि विधिज्ञाप्यकर्माणि अकृत्यानि निषिद्धकर्माणि तैर्विमुक्ता इत्यर्थो गृह्यते चेत् तर्हि सर्वथा कर्ममार्गप्रतिषेधेन ज्ञानमार्गस्य सिद्धिः । एवं सति मारणादिकृत्यस्य कथा दूरादेवाऽपास्ता वेदितव्या । अत एव शत्रुपदेन लौकिकशत्रुग्रहणं सर्वथा विप्रतिषिद्धमेव । मारणाद्यर्थे "कृती छेदने" तथा कर्माद्यर्थे "डुकृञ् करणे" च इत्युभयेषां प्रयोगः ।

वयं तव भक्ता विमुक्ता भवाम इति संबन्धः । आत्मशुद्धस्य मुक्तावधिकारात् । त्वत्पादपद्मप्रधृतपरशुना अज्ञानिनां कृते परशुरूपत्वात् तेषां छेदने समर्थत्वादित्यर्थः । तुण्डखण्डीकृताङ्गः तुण्डेन खण्डीकृताङ्गः । "प्रकृत्यादिभ्य उपसंख्यानमिति" तृतीया ।

ध्वस्तमुखो विदग्धशाकल्यवत् । सद्द्वेषी विषयादिषु प्रवृत्तत्वात् दृढाहङ्कारत्वाच्च । अत एव अतिकलुषं मलिनं कालपाशाग्रबद्धः कालस्य यमस्य पाशः "विततो मृत्युपाशः" इति श्रुतेः । तस्याग्रेण बद्धः सन् याम्यं पुरं यातु । "इच्छार्थेभ्यो विभाषा वर्तमाने" पा० ३।३।१७० । "पुनः पुनर्वशमापद्यते मे" इति श्रुतेः । परमात्मज्ञानरहितस्य संसारे पच्यमानत्वं श्रुतिप्रसिद्धमिति परमार्थः ॥

रागद्वेषादिकामवर्गस्य निवृत्तिमाह भीम इति ।

मूलम्

भीम श्रीशालुवेश प्रणतभयहर प्राणजिद् दुर्मदानां,
याचेऽहं चास्य वर्गप्रशमनमिह ते स्वेच्छया बद्धमूर्ते ।
त्वामेवाशु त्वदङ्घ्र्यष्टकनखविलसद्ग्रीवजिह्वोदरस्य,
प्राणा यान्तु प्रयाणं प्रकटितहृदयस्यायुरल्पायतेश ॥ -५

भाष्यम्

हे प्रणतभयहर शरणागतरक्षक श्रीशालुवेश, हे अल्पायतेश दीनरक्षक, दुर्मदानां राक्षसानां प्राणजिद् नाशकः अत एव भीमः । इह संसारे स्वेच्छया बद्धमूर्ते स्वेच्छया गृहीतदेह, कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात् । अस्य रागद्वेषादिकामवर्गस्य प्रशमनम्, अस्य संसारस्य वा इदमासंनिधानित्वात् वर्गप्रशमनं निवृत्तिं ते तव सकाशात् अहं त्वामेवाशु शीघ्रं याचे द्विकर्मत्वात् । प्रकटितहृदयस्य सवृत्तिकस्य प्रकटितबहिर्भावस्य त्वदङ्घ्र्यष्टकनखैः विदलद्ग्रीवजिह्वोदरस्य तव चरणाष्टकैः अष्टभैरवैः

नष्टसामर्थ्यस्य द्वेषवर्गस्य संसारस्य आयुः जीवनकालः प्राणाः सामर्थ्यं प्रयाणं यान्तु स्वरूपे विलीनतां गच्छन्तु इत्यर्थः । रागद्वेषमयसंसारस्य निवृत्तौ सत्यां सम्यक् तत्त्वज्ञानं भवतीति भावः ॥ यज्ञरूपकेणाऽऽह श्रीशूलमिति —

## मूलम्

श्रीशूलं ते कराग्रस्थितमुसलगदावृत्तवात्याभिघातात् ,
यातायातारियूथं त्रिदशविघटनोद्धूतरक्तच्छटार्द्रम् ।
सद्दृष्ट्वाऽऽयोधने ज्यामखिलसुरगणाश्चाशु नन्दन्तु नाना-
भूता वेतालपूगः पिबतु तदखिलं प्रीतचित्तः प्रमत्तः ॥ ६

## भाष्यम्

हे शरभ खगपते ते तव कराग्रस्थितमुसलगदावृत्तवात्या तव कराग्रस्थिते मुसलगदे सामर्थ्यविशेषे तयोर्वृत्तेन भ्रमणजातचक्राकारेण वात्या वातसमूहरूपेण अतिवेगसामर्थ्येन अभिघाताद् यातायातारियूथं चराचरारिमण्डलं त्रिदशानां देवानां इन्द्रियाणामित्यर्थः । विघटनम् अस्वास्थ्यीकरणम् , तेन उद्धूतोद्रिक्तं रक्तच्छटार्द्रं रुधिरधारया कर्दमीभूतं रक्तान्यधातुभिः मिश्रीकरणं सद् आयोधनेज्यां युद्धरूपं यज्ञम् युद्धमायोधनं जन्यमित्यमरः । अखिलसुरगणा इन्द्रियाधिदेवा भूताश्च प्राणिनः पञ्चभूतानि च । लिङ्गव्यत्ययं आर्षत्वात् । दृष्ट्वा नन्दन्तु प्रसन्ना भवन्तु उभयेषां हितत्वात् प्रीतचित्तः प्रसन्नो वेतालपूगः प्राणविशेषसमुदायः तदखिलं पिबतु । वेतालपूग आत्मेयभावविशेषत्वात् समुचितमेव युद्धक्षेत्रं यज्ञं कृत्वा निर्दिष्टवान् । अनेन आध्यात्मिक एव यज्ञोऽत्राभिप्रेतः देवासुरभावयोर्विरुद्धत्वेन प्रतिक्षणं युद्धकारि-

त्वेन च प्रसिद्धत्वात् । त्रिदशविघटनमिहेन्द्रियाणां वैचित्र्यरूपं, मुसलगदारूपं सामर्थ्यविशेषं, वृत्तवात्येति प्राणानां वृत्याकारेण प्रवर्तनमिहेति ग्राह्यम् ॥

साधकः साधनालब्धसामर्थ्यमवाप्य हर्षितो गर्जितः सन् प्राहाऽल्पमिति —

## मूलम्

अल्पं दोर्दण्डबाहुप्रकटितविनमच्चण्डकोदण्डमुक्तै-
बाणैर्दिव्यैरनेकैः शिथिलितवपुषः क्षीणकोलाहलस्य ।
तस्य प्राणावसानं पर शरभ विभोऽहं त्वदिज्याप्रभावैः
तूर्णं पश्यामि यो मां परिहसति सदा त्वादिमध्यान्तहेतो ॥ -७

## भाष्यम्

हे पर शरभ विभो आदिमध्यान्तहेतो उत्पत्तिस्थितिसंहार-कारण त्वदिज्याप्रभवैः तव सङ्गतीकरणरूपैः प्रभावैः तूर्णं शीघ्रं पश्यामि । यस्तु सदा मां परिहसति इन्द्रियगणः, त्वत्कृपया वशीभूते तस्मिन्, परिहासः कीदृश इति पश्यामि इति साभिमानोक्तिः । अल्पं निम्नं दोर्दण्डो भुजदण्डश्चासौ बाहुश्च तेन प्रकटितो विनमच्चण्डकोदण्डः प्रहरणसामर्थ्यविशेषः । 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' इति श्रुतिः । तेन मुक्तैरनेकैः दिव्यैः साधनरूपसामर्थ्यैः शिथिलितवपुषः क्षीणकोला-हलस्य प्राणावसानं सामर्थ्यसमाप्तिं पश्यामीति पूर्वेण सम्बन्धः ॥

## मूलम्

इति निशि प्रयतस्तु निरासनो यममुखः शिवभावमनुस्मरन् ।
प्रतिदिनं दशवार-दिनत्रयं जपति निग्रहदारुणसप्तकम् ॥ -८

## भाष्यम्

इति पूर्वोक्तक्रमेण प्रयतः संयतः सन् । तु अवधारणे अर्थात् प्रयत एवात्र विनियुज्यते । निरासनः आस्यते अस्मिन्निति आसनं शय्या, तन्निर्गतः जितनिद्र इत्यर्थः । यममुखः यमनियमप्रधानः यमनियमयोर्योगाङ्गत्वात् । यमपदेन उभयोर्ग्रहणम् प्रयत इति वचनात् । निशि रात्रौ 'या निशा सर्वभूताना' मिति गीतावचनात् । शिवभावं कल्याणभावनात्मकं परमात्मनं शिवं शरभमनुस्मरन् मुहुर्मुहुः आवर्तयन् प्रतिदिनं प्रत्यहं दशवारं दशवृत्यात्मकं तद्युक्तं दिनानां सप्तानां त्रयम् एकविंशतिदिन-पर्यन्तमित्यर्थः । निग्रहदारुणसप्तकं निग्रहकारकं दारुणसप्तकं सप्तश्लोकात्मकम् मध्यमपदलोपित्वात् । 'मनो दुर्निग्रहं परम्'। दारुणं भीष्मं भयानकम् इन्द्रियाणां निग्रहे दारुणसप्तकम् । इन्द्रियाणां प्रमथनशीलत्वात् । 'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः' इतिप्रमाणात् । अत एव दशवारेति ग्रहणम् । ननु मनसोऽपीन्द्रियत्वात् कथं दशवारेति चेन्न मनसो निरुद्धत्वात्, इन्द्रियस्य 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इति पृथङ् निर्देशात् । एकविंशतिदुःखध्वंसो मोक्ष इति न्यायविदां समयः, तस्मादेकविंशतिग्रहणम् ॥

मूलम्

इति गुह्यं महाबीजं परमं रिपुनाशनम् ।
भानुवारं समारभ्य मङ्गलान्तं जपेत् सुधीः ॥ -१

भाष्यम्

इति गुह्यं गुहायां भवं महाबीजं कारणं सर्वेषां स्तोत्राणां परमं श्रेष्ठं रिपुनाशनं कामक्रोधनिवारकम् 'जहि शत्रुं महाबाहो कामरूपं दुरासदम्', 'जहि शत्रुं रपमृधो नुदस्वाभयं कृणुहि विश्वतो नः ।' (काण्व०सं० ७-३८) 'शत्रूणां ग्रीवाः कृन्तामि (का० सं०)

'काम एष क्रोध एष रजोगुणसमुद्भवः ।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ।

भानुवारं द्वादशवारं द्वादशधा विभक्तम् ज्योतिर्मयरूपेण इतिहेतोर्द्वादशग्रहणम् । समारभ्य मङ्गलान्तं ब्रह्मप्राप्तिपर्यन्तम् । (मङ्गलं श्रेयसि श्वेतः इति विश्वः । 'स्वरूपप्रान्तयोरन्तमन्तिकेऽपि प्रयुज्यते' इति शाश्वतः । 'कल्याणं मङ्गलं शिवम्'—इत्यमरः ।) जपेत् स्मरेत् । सुधीः सुष्टु धीर्यस्यासौ सुधीः । 'सन् सुधीः कोविदो बुधः' इत्यमरः । सुधीःब्रह्मवित् 'एतद् बुद्ध्वा बुद्धिमान् स्यात्' इति गीता । इत्यनेन मारणादिषु एतत्स्तोत्रपाठकः प्रवर्तते इति कुधियां कथनं परास्तं वेदितव्यम् । प्रथमं पद्यं मनोनिग्रहात्मकम् इन्द्रियनिग्रहात्मकं च द्वितीयं ब्रह्मप्राप्तिफलप्रदर्शनार्थमिति स्तोत्र-प्रतिपाद्यक्रमः प्रदर्शितः श्लोकद्वयेनेति ॥

॥ इति श्रीआकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे नरसिंहकृता शरभस्तुतिः समाप्ता ॥

❀❀